॥ ओम् ॥

# भक्तकुसुमाञ्जलिः ॥



श्रीमदद्वैतविद्याचार्यश्रीभरद्वाजकुलजलधिकौस्तुभश्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चान्दीक्षितवंशोद्भवस्य पवित्रितकीर्तेरमात्यशिरोमणेः श्रीनीलकण्ठदीक्षितस्य द्वितीयसूनोर्वंशजस्य नीलकण्ठसमुद्रवासिनः श्रीपिच्चुमणिगुरोस्तनूजातेन मद्रमण्डलराजकीयमहाकलाशालासंस्कृताचार्यकाध्यक्षेण मद्रमण्डलराजकीयप्राच्यलिखितपुस्तकशालाध्यक्षेण दाक्षिणात्यकोशानुसारिश्रीमन्महाभारतादिप्रकाशकेन

विद्यासागर-विद्यावाचस्पति-
पि. पि. सुब्रह्मण्यशास्त्रिणा
संकलय्य प्रकाशितः



श्रीरङ्गस्थेन गुरुभक्तशिखामणिना
टि. के. बालसुब्रह्मण्यार्येण
श्रीवाणीविलासमुद्रणालये मुद्रितः
१९३८



# BHAKTAKUSUMANJALI

LAID AT THE SACRED FEET OF
HIS HOLINESS SRI JAGADGURU
SRI CHANDRASEKHARA BHARATI SWAMI
OF SRINGERI,

ON THE OCCASION OF THE
**NAKSHATRAMAHOTSAVA (1912-1938)**

---

EDITED BY
*Vidyasagara Vidyavachaspati*
P. P. SUBRAHMANYA SASTRI B. A. (OXON).
*Professor of Sanskrit & Comparative Philology,*
*Presidency College, & Curator, Government*
*Oriental Manuscripts Library, Madras.*



PUBLISHED BY
THE SRI VANI VILAS PRESS,
SRIRANGAM
1938.



॥ ओम् ॥

# भक्तकुसुमाञ्जलिः ॥



श्रीमत्परमहंसपरिव्राजकाचार्यवर्यपदवाक्यप्रमाण-
पारावारपारीण-यमनियमासनप्राणायामप्रत्याहा-
रध्यानधारणसमाध्यष्टाङ्गयोगानुष्ठाननिष्ठतपश्च-
क्रवर्ति-अनाद्यविच्छिन्नगुरुपरंपराप्राप्तषड्दर्श-
नस्थापनाचार्य-व्याख्यानसिंहासनाधीश्वर-स-
कलनिगमागमसारहृदयसांख्यत्रयप्रतिपादक-
वैदिकमार्गप्रवर्तक-सर्वतन्त्रस्वतन्त्र-आदिराज-
धानीकर्णाटकसिंहासनप्रतिष्ठापनाचार्य-श्रीम-
द्राजाधिराजगुरुभूमण्डलाचार्य-ऋश्यशृङ्गपुर-
वराधीश्वरतुङ्गभद्रातीरवासि-श्रीमद्विद्याशंकरपा-
दपद्माराधकश्रीजगद्गुरुश्रीसच्चिदानन्दशिवाभिनव-
नृसिंहभारतीस्वामिगुरुकरकमलसंजातश्रीजगद्गुरु-

श्रीमच्चन्द्रशेखरभारतीस्वामिचरणारविन्दयोः
तच्छात्रैस्तद्भक्तैश्च

श्रीचन्द्रशेखरनक्षत्रमहोत्सवे (1912-1938)
सादरं सविनयं ससमुदाचारं
समर्पितः



# BHAKTAKUSUMANJALI

BEING

A HANDFUL OF DEVOTIONAL FLOWERS

LAID AT THE SACRED FEET OF

HIS HOLINESS SRI JAGADGURU

SRI CHANDRASEKHARA BHARATI MAHASWAMI

WHO ADORNS THE THRONE OF THE SRINGERI MUTT

AS THE WORTHY REPRESENTATIVE OF

SRI SANKARABHAGAVATPADACHARYA

AND

THAN WHOM IT IS IMPOSSIBLE

TO COME ACROSS A HOLIER PERSONAGE

A TRUER MAHATMA, A NOBLER SAINT

AND A MORE RIGOROUS ASCETIC

ON

THE EVER MEMORABLE AND AUSPICIOUS OCCASION

OF THE

NAKSHATRA MAHOTSAVA (1912-[illegible])

BY

HIS HUMBLE PUPILS

AND DEVOTEES



॥ ओम् ॥

# ॥ उपोद्घातः ॥

---

योऽभूदप्पय्यनामा निगमततिविदां यज्वनामग्रगण्यो
यस्मिन्साचिव्यदक्षः सितयशसि कुले नीलकण्ठश्च जातः
तत्रोत्पन्नो विदेशेऽप्यधिगतविलसद्गुणगैर्वाणवाणिः
सुब्रह्मण्योऽतिभक्त्या प्रणमति सततं शेखरं चन्द्रपूर्वम् ॥

नृसिंहभारतीन्द्राय नमोऽस्तु ज्ञानसिन्धवे ।
शारदा यत्कटाक्षाणां साऽप्यवेतनकिङ्करा ॥ २ ॥

चन्द्रशेखरभव्यश्रीचरणोन्मार्जनाम्भसाम् ।
विवर्ता जगदुत्सङ्गे विहरन्ति मदुक्तयः ॥ ३ ॥

श्रीमन्मङ्गलनायिकाप्रियतमः श्रीसुन्दरेशाभिधो
यस्यास्ते कुलदेवता मखिवरश्रीनीलकण्ठार्चितः ।
हंसश्रेष्ठनृसिंहभारतियतिप्रत्तप्रसादोऽपि यो
वर्षे षोडशकेऽपि पूर्णकृपया गीर्वाणविद्यार्जने ॥४॥





श्रीचन्द्रशेखरगुरुः कृपया कदाचित्
पादे विनम्रमपि यं मधुरोपकण्ठे ।
अन्वग्रहीत्सकलसज्जनमाननीय-
कल्याणशेवधिमनन्यसदृक्षमेधम् ॥ ५ ॥

तेनेयं ग्रथिता भक्तकुसुमाञ्जलिमालिका ।
भक्त्या समर्प्यते श्रीमच्चन्द्रशेखरपादयोः ॥ ६ ॥

अनेन भक्तिपूतेन प्रीयतां कर्मणा गुरुः ।
पत्रैः पुष्पैर्युतैर्भक्त्या प्रीयन्ते साधवो हि यत् ॥ ७ ॥

अलौकिकेऽर्थे निरवद्यमाम्नायस्य प्रामाण्यमिति नास्त्यत्राभियुक्तानां तान्त्रिकाणां विसंवादः । आम्नायस्य प्रामाण्यं नेतरेषामिव कारणगुणप्रयुक्तं, किंतु स्वतः सिद्धमित्यपि तेषामेककण्ठ्यम् । तस्यैतस्याम्नायस्य तदादिष्टस्य धर्मस्य वा यदा यदा विलोपः प्रसजति तदा भगवान् यज्ञपुरुषः स्वयमेवावतीर्य वेदान् वैदिकांश्च धर्मान् यथापूर्वं प्रतिष्ठापयतीति सर्वजनीनः सिद्धान्तः ।





एवं स्थिते लोकतन्त्रतत्त्वे यदा बाह्याश्चार्वाकताथागतार्हताः श्रुतेः प्रामाण्यमनभ्युपयन्तो भगवता प्रवर्तितं वैदिकं धर्मं विलोपयितुं प्राक्रमन्त, तदा भगवदवतरणं प्राप्तकालमभूत्। भगवदवतारः क्वचित् साक्षात्, क्वचित्तदधिकारिपुरुषानुप्रवेशेनेति भगवदवताररहस्यवेदिभिराख्यितम्। अतो भगवानेव श्रीशंकरभगवत्पादरूपतयावतीर्य नास्तिकमतान्यपुनरङ्कुरं निरास्थदित्यैतिहासिका विदन्ति।

एवं महता प्रयत्नेन वैदिकं धर्मं प्रतिष्ठापितवतामाचार्याणामनुग्रहेणैव नास्तिकभूयिष्ठे कलावपि क्वचित् क्वचित् धर्मपथावलम्बनश्रद्धालुता जागर्ति जनानामिति प्रतीमः। यदि ते आचार्यपादा नास्तिककुलाकुले तस्मिन् समयेऽवतीर्य दुर्मतानि निरस्य वैदिकं मतं न प्रत्यष्ठापयिष्यन्, नूनमिदानीं वेदा वा वैदिका धर्मा वा न नाम्नापि स्मर्तुमलप्स्यन्त।

इत्थं पुना रोपितमूलस्य वैदिकधर्मस्य मा कदापि लोपः प्रसाङ्क्षीदिति सहजकृपोत्तरङ्गान्तरङ्गैराचार्यपादैः



'बहवोऽत्र मादृक्षा यतिवर्या अध्यात्मतत्त्वं व्याचक्षाणा वैदिकं धर्मं परिपालयन्तु' इत्यनुगृह्य तत्र तत्र विद्यापीठानि प्रतिष्ठापितानि। तत्रान्यतमं प्रधानभूतं च श्रीशृङ्गगिरिशारदापीठमिति प्रथमानं वर्तते। पीठमिदमधिष्ठाय बहवः पवित्रतरकीर्तयो धिषणावधीरितधिषणाः परित्यक्तसकलैषणा आचार्यवर्या वैदिकं धर्मं प्रचारयन्तोऽध्यात्मज्ञानमुपदिशन्तः पामराणामपि धर्माचरणश्रद्धां वर्धयन्तो विरेजुः, येषु सुरेश्वरविद्यातीर्थविद्यारण्यनृसिंहभारतीप्रमुखानां पुण्यश्लोकानां सुधियां नामधेयान्यद्यत्वेऽपि सकलेषु संख्यावत्समाजेषु पापठ्यन्ते।

अद्यत्वे तदिदं व्याख्यापीठमलंकुर्वाणाः श्रीचन्द्रशेखरभारतीस्वामिनः समधिगतपरावरतत्त्वयाथात्म्याः ज्ञानानुष्ठानशेवधयः शमदमादिगुणपरिकर्मिता आत्मारामा आश्रितवर्गाननुगृह्णन्तो विराजन्त इति मन्महे फलितमद्य जन्मवतां सुकृतैरिति। स्वामिन एते आदिशंकराचार्यात् चतुस्त्रिंशा विद्याजन्मनि, स्वाचार्याणां श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनां चर-





णारविन्दमधुव्रतायमानमानसा इति चात्र प्रकाशितै-रभिज्ञमण्डलानां लेखैरेवावेद्यते। स्वामिन एते उप-सप्तविंशेभ्यो वर्षेभ्यः पूर्वं पीठमिदमध्यारूक्षन्। एषु वत्सरेषु स्वामिभिरेतैर्वैदिकधर्मसंस्थापनस्याध्यात्मवि-द्याप्रचारस्य च कृते कृत उपकारो न कदाप्यस्माभि-र्विस्मर्तुं शक्यते। एवमादिना निरतिशयेन महिम्ना साक्षादादिशंकरभगवत्पादा एवैतद्रूपेणावतीर्णा इति प्र-त्येतुं प्रभवामः।

सप्तविंशवार्षिकमहोत्सवमेनमभिनन्दितुकामैरस्मा-भिः प्रार्थिता अभिज्ञशिखामणयः स्वस्वोपन्यासान् संप्रेष्य महदुपचक्रुरिति तेषां सविधे धन्यवादमुप-नयामः। तथा ग्रन्थस्यास्य प्रचारणाय महदुपकृतवतां सचिवोत्तम-सर्-सि. पि. रामस्वाम्यार्याणां, तथास्य मुद्रणेऽव्याजमुत्साहं प्रदर्श्य मुद्रणमनवद्यं निर्वर्तयि-तवतां गुरुभक्तशिखामणीनां टि. के. बालसुब्रह्मण्या-र्याणां च स्वामिवर्येषु निरुपधि भक्तिमामोदयामः। अत्रत्या उपन्यासाः सर्वेऽपि गीर्वाणभाषायामाङ्गल-भाषायां च मुद्रिताः सन्ति। ते चोपन्यासाः तासु





been held in the highest regard by all followers of Hinduism. Besides leaving behind him priceless treasures in the domain of Sanskrit Literature and Indian Philosophy, our revered Acharya established Temples of Learning and Culture at important centres from which his successors could radiate faith and courage for all time. And, among such centres, Sringeri in Mysore is justly held to be the most ancient and authoritative seat, wherein the Divine Acharya's tradition is still sustained with undiminished vigour by the long line of holy saints who have adorned the Great Vyakhyana Simhasana presided over by the Goddess Sarada herself.

The Thirty-third Pontiff of Sringeri, the late Sri Sacchidananda Sivabhinava Nrisimha Bharati Mahaswamigal, was indeed a Jivanmukta. His unrivalled austerities, his unequalled scholarship and his beaming personality have left a lasting mark on all those who came in contact with him. And what a worthy successor has he given us in his dutiful pupil Sri Chandrasekhara Bharati Swamigal.





For seven and twenty years, we have had the good fortune to be participators in His Holiness's company; watching the daily worship in which His Holiness loses himself and the world ; hearing his discourses, pregnant with sublime truths and yet clear as crystal ; pouring out our woes and sorrows which he drives off magically with a smile or a nod or an encouraging phrase, which makes us realise that here at any rate in his all-powerful presence we, however sinful and ignorant, are yet in touch with Divinity. Indeed, every one who has had the good fortune to be anywhere near Sringeri or near the Master, is always driven by the one thought, when again and yet again shall I have this inspiring Darsan, this gift of new life.

The following pages give ample evidence of the diverse ways in which the Master has appealed to his devotees. To mark, however inadequately, the twenty-seven years of His Pontificate, twenty-seven flowers which for sincere flavour and inherent sweetness could not be easily rivalled, have been culled from various





gardens from holy Prayag to delightful Ananta-Sayana and strung together and placed at the holy lotus-feet of the Divine Master that He may be pleased in His Infinite Mercy to continue to bless His earnest devotees who have chosen this humble method of appealing to Him for His limitless Love and Grace.

To that scholar-statesman and devotee of our Lord, Sachivottama Sir C. P. Ramaswami Ayyar, I record my thanks, for having given princely support to this humble undertaking of mine. Thanks are due to Gurubhakta-sikhamani T. K. Balasubrahmanya Aiyar who cheerfully undertook the task of publishing this modest collection in such lovely and bewitching colours—one more token of his all-consuming love for the Pitha and the Pontiffs of Sringeri.

The contributions are arranged on a bilingual basis, all the articles appearing both in Sanskrit and English, the asterisk indicating that the article in question is a summary, the original appearing in the other part. The work of summarising the articles from English into





Sanskrit was cheerfully undertaken by my colleague Pandit V. Krishnamachariar.

The inspiring Personality in whose honour these humble tributes of his devotees have been gathered together is sure to forgive the many shortcomings of this undertaking. The Faith that has prompted this enterprise and the spontaneous love and attachment to His holy person which actuated the minds of one and all who have gathered together to lay their humble offerings at His Holy Feet will not be denied this expression of the regard in which His Holiness Sri Chandrasekhara Bharati Swamigal is held by His Sishyas distributed over the length and breadth of this holy land of Bharatavarsha.

May He continue to radiate joy all round and illumine the world with increasing splendour is the humble prayer that goes forth today from every one of His devotees.

BANGALORE
20th August 38. *P. P. Subrahmanya Sastri.*






१. महामहोपाध्यायाः प्रयागस्थाः गङ्गानाथझाशर्माणः

**आचार्यसिद्धान्तः** १

२. अड्डवकेट् वीरराघवपुरस्थाः कृष्णस्वाम्यार्याः

**पञ्चरत्नस्तोत्रम्** ३

३. विद्यासागर-विद्यावाचस्पति-मद्रपुरीस्थ-पि. पि. सुब्रह्मण्य-शास्त्रिणः

**मण्डनमिश्रसुरेश्वराद्वैतम्** ५

४. प्राड्विवाकाः मधुरापुरीस्थाः चन्द्रशेखरार्याः

**श्रीचन्द्रशेखरभारतीस्वामिनः*** १३

५. दिवान् बहदूर् प्राड्विवाकाः मद्रपुरीस्थाः के. एस्. रामस्वामिशास्त्रिणः

**भौतिकाध्यात्मशास्त्रतत्त्वाविरोधः*** १४

६. महामहोपाध्यायाः करुंकुलाभिजनकृष्णशास्त्रिणः

**किंचित्पूर्ववृत्तम्** १५

७. प्राड्विवाकवराः कडयग्रामाभिजनशेषार्याः
श्रीशंकराचार्यावतारः* १६

८. अड्वकेट् मधुरापुरस्थाः वेंकटरामार्याः
श्रीचन्द्रशेखरभारतीमधुराविजयः* १७

९. अड्वकेट् मीमांसारत्नं त्रिशिरःपुरस्थाः ए. वि. गोपालाचार्याः
श्रीचन्द्रशेखरभारतीगुणातिशयः १८

१० मद्रपुरीस्थाः पण्डितवराः वे. कृष्णमाचार्याः
अद्वैतमते अविद्याविलसितम् २२

११ मोहमयपुरस्थाः मन्त्रेश्वरशर्माणः
सद्गुरुषोडशी २६

१२ मद्रपुरीस्थाः देशचरित्राचार्याः एस्. वि. वेंकटेश्वरार्याः
शृङ्गगिरौ श्रीविद्यातीर्थपादाः* ३०

१३ अड्वकेट् मद्रपुरीस्थाः के. बालसुब्रह्मण्यार्याः
मम गुरवः श्रीचन्द्रशेखरभारतीस्वामिनः* ३३

१४ कल्लडैकुरुच्चिस्थाः पण्डितवराः शंकरशास्त्रिणः
श्रीगुरुमहिमा ३४

१५ विजयनगरस्थाः महामहोपाध्यायाः तातसुब्बरायशास्त्रिणः
वेदस्वरूपम् ३७

१६ कुम्भघोणस्थाः महामहोपाध्यायाः पण्डितराजाः अभिनवभट्टबाणाः रायंपेट्टै कृष्णमाचार्याः
आचार्यस्तवः ५१

१७ गुरुभक्तशिखामणयः शास्त्रप्रसारभूषणाः श्रीरङ्गस्थाः
टि. के. बालसुब्रह्मण्यार्याः
**श्रीशृङ्गेरिपीठमाहात्म्यम्*** ५५

१८ प्राड्विवाकवराः मद्रपुरीस्थाः वि. वि. श्रीनिवासय्यङ्गार्-
महाशयाः
**श्रीचन्द्रशेखरभारतीदर्शनमावश्यकम्*** ५७

१९ विद्वच्छिरोभूषणाः विद्याविशारदाः मैसूर्महाराजास्थान-
धर्माधिकारिणः कुणिगल् रामशास्त्रिणः
**श्रीजगद्गुरुचन्द्रशेखरभारतीस्वामिनः** ६०

२० कल्याणपुरीस्थभारतीयगीर्वाणप्रौढविद्याभिवर्धिनीपाठ-
शालायां मीमांसाध्यक्षाः महामहोपाध्यायाः मीमांसाक-
ण्ठीरवाः वैद्यनाथशास्त्रिणः
**आचार्यनुतिः** ६१

२१ कालटीस्थाः पण्डितवराः वेङ्कटाचलशास्त्रिणः
**अद्वैते आनन्दस्वरूपविवेचनम्** ७२

२२ प्राड्विवाकवराः कल्याणपुरीस्थाः जि. श्रीनिवासार्याः
**श्रीचन्द्रशेखरभारतीनां वृत्तान्तविशेषः** ७९

२३ महामहोपाध्यायाः कल्कत्तापुरस्थाः अनन्तकृष्णशास्त्रिणः
**श्रीभगवत्पादमहिमा** ८३

२४ शिवमोग्गास्थाः पण्डितवराः सुब्रह्मण्यशास्त्रिणः
**चारुचर्या** ९१

२५ कुम्भघोणस्थाः प्राड्विवाकाः दिवान् बहुदूर् के. एस्.
रामस्वामिशास्त्रिणः
आचार्यनवरत्नमालिकास्तवः १०३

२६ श्रीशालिवाटीपुरस्थाः अडुवकेट् कृष्णस्वाम्यार्याः
श्रीगीतासारगुर्वष्टोत्तरशतनामस्तोत्रम् १०५

२७ कल्याणपुरीस्थभारतीयगीर्वाणप्रौढविद्याभिवर्धिनीपाठ-
शालायां वेदान्ताध्यक्षाः वेङ्कटेश्वरशास्त्रिणः
श्रीचन्द्रशेखरनक्षत्रमाला १०७




I. Mahamahopadhyaya Dr. Ganganatha Jha M. A., L. L. D., Retired Vice-Chancellor of the University of Allahabad.

*Acharya Siddhanta* * 1

II. Brahmasri R. Krishnaswami Aiyar, M. A., B. L., Advocate, Viraraghavapuram, Tinnevelly.

*Pancharatnastotra* * 2

III. Vidyasagara, Vidyavachaspati, P. P. Subrahmanya Sastri, B. A. (Oxon) M. A. (Madras,) Professor of Sanskrit and Comparative Philology, Presidency College, and Curator, Government Oriental Manuscripts Library, Madras.

*Mandanamisra-Suresvara Identity.** 3

IV. Brahmasri N. Chandrasekhara Iyer B.A., B.L., District and Sessions Judge, Madura.

*Sri Chandrasekhara Bharati* 5

V. Diwan Bahadur K. S. Ramaswami Sastrigal, B. A., B. L., Retired District Judge, Madras.
*The Saint of Sringeri* 9

VI. Mahamahopadhyaya, Vedantabhushana, Sastraratnakara Karungulam Krishna Sastrigal, Retired Principal, Sanskrit College, Mylapore.
*An Incident* * 12

VII. Brahmasri K. G. Sesha Aiyer, B. A., B. L., Retired High Court Judge, Trivandrum.
*Glory of Sankara* 13

VIII. Brahmasri K. R. Venkatarama Aiyar B. A., B. L., Advocate, Madura.
*Sri Chandrasekhara Bharati's Visit to Madura.* 15

IX. Mimamsaratna A. V, Gopalachariar M. A., B. L., Advocate, Trichinopoly.
*The Greatness and Glory of Sri Chandrasekhara Bharati Swamigal** 18

X. Brahmasri V. Krishnamacharyar, Sanskrit Pandit, Presidency College, Madras.
*Avidya in Advaita Vedanta* * 19

XI. Brahmasri M. S. Mantresa Sarma, Editor, Kaiser-i-Hind. Bombay.
*Sadgurushodasi* * 21

XII. Brahmasri S. V. Venkatesvara, Professor of Indian History., Presidency College, Madras.

*Vidyatirtha and Sringeri* 22

XIII. Brahmasri K. Balasubrahmanya Aiyar, B. A., B. L., Advocate, Mylapore, Madras.

*My Master Sri Chandrasekhara Bharati Swamigal.* 30

XIV. Brahmasri A. Sankara Sastrigal, Principal, V. D. S. Sanskrit College, Kallidaikurichi.

*Sri Gurumahima* * 32

XV. Mahamahopadhyaya, Kalaprapurna, Tata Subbaraya Sastrigal, Vizianagaram.

*Vedasvarupam* * 34

XVI. Mahamahopadhyaya, Abhinavabhattabana, Panditaraja R. V. Krishnamachariar, Kumbakonam.

*Acharyastavam* * 36

XVII. Brahmasri Gurubhakta-sikhamani, Sastra-prasara-bhushana T. K. Balasubrahmanya Aiyar, B.A., Srirangam.

*The Greatness of Sringeri and of the Jagadgurus that adorned the Vyakhyanasimhasana there.* 37

XVIII. Brahmasri V. V. Srinivasa Aiyangar, B.A., B.L., Retired High Court Judge, Madras.
*Sri Chandrasekhara Bharati and Sringeri.* 68

XIX. Vidvacchirobhushana, Vidyavisarada Kunigal Rama Sastri, Palace Dharmadhikari, Mysore.
*Sri Jagadguru Chandrasekhara-bharati Swamigal* * 72

XX. Mahamahopadhyaya, Mimamsakanthirava, Brahmasri Vaidyanatha Sastrigal Professor of Mimamsa, Sanskrit College, Bangalore.
*Acharyanuti.* * 76

XXI. Brahmasri P. S. Venkatachala Sastrigal, Principal, Jagadguru Vedanta College, Kaladi.
*Ananda in Advaitavedanta.* * 77

XXII. Brahmasri G. Srinivasa Aiyar, B. A., B. L., Retired Judge of Mysore, Bangalore.
*Noteworthy Incidents in the life of Sri Chandrasekhara Bharati.* * 78

XXIII. Mahamahopadhyaya N. S. Anantakrishna Sastrigal, Professor of Vedanta and Mimamsa, University of Calcutta, Calcutta.
*Sri Bhagavatpadamahima.* * 80

XXIV. Brahmasri Pandit Subrahmanya Sastrigal, Shimoga.

*Charucharya.* * 81

XXV. Diwan Bahadur K. S. Ramaswami Sastrigal, Retired District Judge, Kumbakonam.

*Acharyanavaratnamalikastavam.* * 82

XXVI. Brahmasri R. Krishnaswami Aiyar M.A., B.L., Advocate, Tinnevelly.

*Gitasaragurvashtottarasatanamastotra.* * 83

XXVII. Brahmasri Venkatesvara Sastrigal, Principal, Jagadguru Vidyasala, Sankara Mutt, Bangalore.

*Sri Chandrasekharanakshatramala** 84







१ श्रीशंकरभगवत्पादाचार्याः शिष्यैः सह ।

२ श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनः ।

३ श्रीचन्द्रशेखरभारतीस्वामिनः ।

४ श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनः ।

५ श्रीचन्द्रशेखरभारतीस्वामिनः ।

६ अखिलभारतीयगीर्वाणप्रौढविद्याशाला, कल्याणपुरी ।

७ श्रीचन्द्रशेखरभारतीस्वामिनः ।

८ श्रीनृसिंहभारतीस्वामिनः ।

९ शृङ्गगिरिमठस्थश्रीशंकरभगवत्पादानां विग्रहः ।

१० श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनः
महीशूरपुरसचिवः सर्. के शेषाद्रि आर्याश्च ।

११ श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनः
महीशूरपुरसचिवः वि. पि. माधवरायश्च ।

१२ श्रीशंकरमठः श्रीशंकरालयश्च, कल्याणपुरी ।

१३ श्रीशारदाम्बा, शृङ्गगिरि ।

१४ शृङ्गगिरि श्रीमठान्तरे श्रीमदाचार्यपादानां उत्सव-
प्रवेशः ।

१५ श्रीविद्याशंकरालयः, शृङ्गगिरि ।

१६ शृङ्गगिर्यां तुङ्गानदीतीरे श्रीविद्याशंकरालयः ।

१७ श्री अभिनवविद्यातीर्थस्वामिनः, शृङ्गगिरि ।

१८ श्रीरङ्गस्थ श्रीशंकरालये श्रीशंकरजयन्तीमहोत्सवकाले श्रीमदाचार्यपादानां मूर्त्तिः ।

१९ श्रीरङ्गस्थ श्रीशंकरालये महानवम्यां देवीरूपेणालंकृत श्रीमदाचार्यविग्रहः ।

२० श्रीरङ्गस्थ श्रीशंकरालयस्य अर्धमण्डपे विराजमान विद्यालक्ष्मीः, यशोलक्ष्मीश्च, तदुपरि श्रीमन्नारायणः पद्मभूश्च ; तदधः श्रीदक्षिणामूर्तिस्तोत्रस्याद्यन्तश्लोकौ ।

२१ श्रीरङ्गस्थ श्रीशंकरालयस्य अर्धमण्डपपुरोभागः ।

२२ श्रीरङ्गस्थ श्रीशंकरालयस्य राजराजेश्वरीमुखद्वारम् ।

२३ कालट्यां श्रीमदाचार्याणां दर्शनानन्तरं श्रीशारदाम्बाया आलयं प्रति श्रीचन्द्रशेखरभारतीस्वामिनां गमनम् ।

२४ श्रीरङ्गस्थ श्रीशंकरालयस्य गर्भगृहस्योपरि विद्यमानस्य गोपुरस्य दक्षिणो भागः ।

२५ श्रीमहास्वामिनां सन्निधौ आर्याम्बायाः आविर्भावः ।

२६ अद्वैतसभाध्यक्षाः, कालटी ।

अध्ययनपाठशालाविद्यार्थिनः, कालटी ।

२७ श्रीचतुर्विद्येश्वरमूर्तिः सिंहगिरि ।

---

॥ श्रीः ॥

१

# ॥ आचार्यसिद्धान्तः ॥

[ महामहोपाध्याय, डाक्टर्, एल्. एल्. डि., इत्यादिबिरुदालंकृतेन प्रयागस्थेन श्री गङ्गानाथ झा शर्मणा विरचितः ]



"न वर्णा न वर्णाश्रमाचारधर्माः" इत्यादिकं वाक्यजातं यतः कुतश्चिदुपलभ्य प्रकरणादितात्पर्यनिर्णायकमनाकलय्यैव केचित् 'आचार्याः कर्मानुष्ठानं प्रतिषेधन्ति' इति स्वकल्पितं वेदान्तसिद्धान्तत्वेनोद्धोषयन्ति । तान् प्रति किंचिद्वक्तव्यं भवति ॥

आचार्याणां शारीरकभाष्यादिसकलनिबन्धजाते सम्यग् विवेचिते तदीयसिद्धान्तश्चरम एवंरूपः समुज्जृम्भते । 'चरमपुरुषार्थे ज्ञानमपेक्षितं भवति; ज्ञानसंपादने चित्तशुद्धिरपेक्षिता; चित्तशुद्धिसंपादने च कर्मकलापानुष्ठानमपेक्षितं भवति' इति । एवमवस्थिते च सिद्धान्ते कर्मानुष्ठानस्य परित्यागो नोचितः

प्रतिभाति । विशेषतश्च संसारदशापन्नानां तथाविधः परित्यागोऽनिष्ट एव सर्वथा भवेत् । निःसंसाराणां चरमावस्थाप्राप्तानां तु यदि तथाविधः परित्यागो भवोद्दिष्टो भवतु नाम । तदवलम्बेन तु सांसारिकाणां कर्मपरित्यागोऽनर्थायैव कल्पेत ।

काञ्चीशृङ्गेर्यादिपीठेषु श्रीविद्यायाः सपर्यादि विधाय देशे देशे पूजापीठानि स्थापितवन्त आचार्याः कथं कर्मानुष्ठानपरित्यागमुपदिशेयुरित्यपि विवेचनीयं भवति । तत्तत्पीठाधिष्ठिताश्चाचार्यावताररूपाः श्रीमन्त इदानींतना अपि तथाविधमेव समग्रपूजोपचारमनुतिष्ठन्तो दृश्यन्ते इत्यलं पल्लवितेन ॥ *

---

* अयमेव सिद्धान्तो मण्डनमिश्रैः ब्रह्मसिद्धावबलम्बितः ।

संपादकः ।



# ॥ पञ्चरत्नस्तोत्रम् ॥

[एम्. ए. बि. एल्. अड्वकेट्. इत्यादिबिरुदालंकृतेन
वीरराघवपुरवास्तव्येन ब्रह्मश्री-कृष्णस्वाम्यार्येण रचितम्]



श्रीमच्छंकरदेशिकेन्द्रकलिते व्याख्यानसिंहासने
श्रीमद्वार्तिककारमुख्यमुनिभिः सर्वज्ञकल्पैः पुरा ।
अध्यूढे विमलेऽभिषिक्तमधुना सत्यात्मनिष्ठापरं
वन्दे देशिकसार्वभौममनिशं श्रीचन्द्रचूडाह्वयम् ॥

नानादेशसमागतान् पदनतांश्छात्रान् विभिन्नाशयान्
आधिव्याधिविचित्रतापविवशान् स्वास्थ्यं निनीषुर्मुनिः ।
तत्तत्काङ्क्षितपूरणाय वरदां संप्रार्थयन्नम्बिकां
यो लोकत्रयदेशिको विजयते सेवे तदङ्घ्रिद्वयम् ॥

मिथ्याज्ञानविजृम्भितं भवसुखं संत्यज्य नित्यं सुखं
प्राप्तुं स्वीयपदाम्बुजं श्रितवतो भक्तस्य पुण्यात्मनः ।
ब्रह्मात्मैक्यविबोधकश्रुतिवचःपीयूषसंदायिनं
वन्दे ब्रह्मविदुत्तमं प्रतिदिनं श्रीशृङ्गशैलाधिपम् ॥

शान्ताजानिपदाब्जरेणुकणिकासंपर्कसंपाविते
श्रीशृङ्गाचलसानुमध्यविलसत्तुङ्गापगातीरगे ।
नानापादपशोभितेऽतिमधुरं कूजद्विहङ्गावृते
देशे चित्तविशोधके गुरुवरं सेवे कदा वा पुनः ॥

संसाराम्बुधिलङ्घने कृतधियो यत्पादपङ्केरुहं
भक्तक्षेमधुरंधरं भयहरं नौकायमानं विदुः ।
तस्यैतस्य नृपालसेवितपदस्याचार्यचूडामणेः
संमान्यौ चरणावनन्यशरणः शीर्षे निदध्यां कदा ॥



# ॥ मण्डनमिश्र-सुरेश्वराद्वैतम् ॥

[विद्यासागर-विद्यावाचस्पति-इत्यादिबिरुदालङ्कृतेन मद्रास् प्रसिडेन्सिकालेज् संस्कृताचार्येण पि. पि. सुब्रह्मण्य-शास्त्रिणा विरचितम्]

पुराणमित्येव न दूषणीयं
न चापि सर्वं नवमेव साधु ।
सन्तः परीक्ष्यान्यतरद्विदोषं
गृह्णन्ति तत्त्वं परमार्थसारम् ॥

अस्ति किलैतत् चिरान्निखिलविपश्चिदभ्युपगतमविच्छिन्नसत्संप्रदायोपदेशक्रमायातं विद्यारण्यादिमान्यमनीषिगणवर्णितं च यदाचार्यमण्डनमिश्रो भगवत्पादैः श्रीशंकराचार्यैर्वादे पराजयं प्रापितः परिव्रज्यामूरीकृत्य सुरेश्वरनाम्ना पप्रथ इति । स एवायं मण्डनमिश्रो यः किल *ब्रह्मसिद्धे-

* ब्रह्मसिद्धिरेषा बहुत्र ग्रन्थेषूल्लिख्यमानापि वेदान्तप्रस्थानप्रवर्तनपरैरसकृदुपश्लोकितापि साक्षादिव ब्रह्मसिद्धेरेतावत्पर्यन्तं नास्माकं स्वस्याः स्वरूपमविकलमाविश्चकारेति परं विषादपदमासीत् । अधुना तु मद्रनगरीराजकीयप्राच्यपुस्तकालयात् शङ्खपाणिव्याख्यासनाथा प्रकाशमुपनीता सैषा विदुषां निरतिशयमानन्दमुपजनयतीति सामोदमावेदयामः ।

निर्माता । यत्सत्यं विद्यन्त एवात्र कतिपये विषया मण्डनमिश्रैरभ्युपगता भगवत्पादशंकरगुरुसिद्धान्तविरुद्धाश्च— यथा शब्दाद्वैतम् , विपरीतख्यातिः, ज्ञानकर्मसंबन्ध इत्यादयः— तथापि मन्यामहे त एव विषयाः प्रभवन्ति निरूपयितुं कृतिरेषा मण्डनमिश्रैर्गार्हस्थ्यमास्थितैर्विरचितेति, यतस्ते तदा वेदान्तिनोऽपि परं कर्ममीमांसाश्रद्धाहितधियः कर्मठा अभूवन्निति तदीयचरित्रैर्ज्ञायते । अनन्तरं च शंकरभगवत्पादैरुत्तरदिग्जैत्रयात्रायां वाद उपनिबद्धाः पराजयमनुप्राप्य तच्चरणनलिनासेवनेन परिव्रज्यामङ्गीकृत्य सुरेश्वरनाम्ना प्रथिताः कर्मठतां परिहाय शुद्धब्रह्माद्वैतमतमवालम्बन्त, रचयामासुश्चाचार्यनिदेशेन वार्तिकादिकमिति स्पष्टमिदं गुरुपरंपराचरित्रपरिशीलिनाम् ।

एवं स्थिते केचिद्विमर्शकाः पूर्वचरित्रवेदिनोऽपि आप्तवाक्यश्रद्धालवोऽपि मण्डनानां तमिमं वृत्तान्तमन्यथयितुमुत्सहन्ते । सोऽयं तेषामुद्यमः कियद्दूरं विचारसहः, अपि नाम फलेग्रहिर्भवेदिति तटस्थैरवहितैर्विमृष्टव्यम् । नास्माकं तेषामुद्यमेऽस्मिन् कश्चिदादरः प्रद्वेषो वा । यदुपपत्तिसहमनवद्यं च तत्र स्थास्यामः । तदत्र महत्सु तेषु किमपि नापराध्येम ।

एवमत्र ते प्रत्यवतिष्ठन्ते— ब्रह्मसिद्धिकर्ता मण्डनोऽन्यः, वार्तिककर्ता सुरेश्वरोऽन्यः । मण्डन एव प्राप्तकर्मन्दिभावः सुरेश्वरोऽभूदिति प्रवादो नोपपत्तिसहः । परं तु विश्वरू-

पनामान्यो गृहस्थो मनीषी यत्याश्रमे सुरेश्वरनाम्ना पप्रथे। स एव वार्तिककारः। सन्ति चात्रोपपत्तयः। तथाहि—

१ मण्डनः स्फोटसिद्धौ स्फोटं साधयित्वा तमिमं स्फोटवादं ब्रह्मसिद्धावद्वैतमते प्रवेशयन् शब्दाद्वैतमभ्युपगच्छति। सुरेश्वरस्तु स्फोटवादनिराकरणे सर्वथा भगवत्पादशंकरमेवानुसरति।

२ मण्डनो विपरीतख्यातिमभ्युपगच्छति; प्रसाधयति च तां विभ्रमविवेके ब्रह्मसिद्धौ च। सुरेश्वरस्तु सर्वथा तां निराकरोति; न मात्रयापि तां स्निग्धं कटाक्षयति।

३ मण्डनो ब्रह्मसिद्धावविद्याद्वैविध्यमभ्युपगच्छति। सुरेश्वरस्तु तन्निराकरोति।

४ मण्डनो जीवमविद्याश्रयमभिधत्ते। सुरेश्वरस्तु ब्रह्माविद्याश्रयं वर्णयति।

एवमेतैरन्यैश्च हेतुभिर्मण्डनसुरेश्वरयोर्नैक्यमिति।

अत्रेदमवधेयम्— पूर्वोक्ता अन्या अप्येवंजातीयकाः परस्परविरोधरूपा युक्तयो मण्डनसुरेश्वरयोरैक्यं नापलपितुमलम्। एवं हि तयोरैक्यवादिनामभिसन्धिः–यन्मण्डनो भगवत्पादपद्कमलसंश्रयणात्पूर्वं गृहस्थो भूत्वा स्फोटसिद्धिं ब्रह्मसिद्धिं विभ्रमविवेकमन्यांश्च कतिचन ग्रन्थान् जग्रन्थ। भगवत्पादचरणनलिनासेवनात्परं यतिर्भूत्वा वार्तिकादीनारचयत्। भगवत्पादैः सह वादकरणात्पूर्वं मण्डनो भिन्नप्र-

स्थान एवाभूत् । वादात्परमेव तदन्तेवासितामापन्नस्तन्मत-मवालम्बतेति । एवं स्थिते ब्रह्मसिद्ध्यादेर्वार्तिकादेश्च विरो-धेनावश्यं भाव्यमेवेति द्रढयत्येवैतत् पूर्वतनं मण्डनगतं वृत्ता-न्तम् । "सिंहेन भूत्वा बहवो मयात्ताः" इतिवत् गृहस्थेन भूत्वा भिन्नप्रस्थानमास्थितम् , संन्यासिना भूत्वा शांकरप्र-स्थानमवलम्बितमित्यत्र न कामप्यनुपपत्तिमुत्पश्यामः । निखि-लजगद्वन्दनीयपदस्यौपनिषदे राद्धान्तेऽनितरसाधारणमाचा-र्यकमाबिभ्राणस्य भगवत्पादशंकरस्यैव भिन्नभिन्नस्थले पर-स्परविरुद्धविषया उक्तयो दरीदृश्यन्ते । यथा माण्डूक्यो-पनिषद्भाष्ये— "अभिधानाभिधेययोरेकत्वेऽपि अभिधान-प्राधान्येन निर्देशः कृतः" इति शब्दार्थयोस्तादात्म्येन स्फो-टवादोऽङ्गीकृतः । ब्रह्मसूत्रभाष्ये तु स्फोटवादो बहुधा निरस्तः । एवमेकस्यैवाचार्यस्य कालभेदेन भिन्नभिन्नाभि-प्रायता संभवत्येव । नैतावता तस्य भेदो वक्तुं शक्यते ।

यच्च विश्वरूप एव संन्यासाश्रमे सुरेश्वरसंज्ञोऽभूत् ; ततस्तयोरैक्यमङ्गीकुर्मो न तु मण्डनसुरेश्वरयोरिति— तत् 'विंशतिपञ्चकं तु दद्यां, न तु शिरःकर्तनेऽपि शतम्' इति वचनमनुकरोति । यतो विश्वरूपसुरेश्वरयोरैक्यमभ्युपगच्छ-द्भिर्मण्डनविश्वरूपयोरैक्ये प्रमाणावगते मण्डनसुरेश्वरयोरप्यै-क्यमकामैरप्यभ्युपगन्तव्यमेव । तदभिन्नाभिन्नस्य तदभि-न्नत्वं हि सर्वसंमतम् । तथाहि— विद्यारण्यः संक्षेपशंकर-दिग्विजये मण्डनमिश्रस्यैव उम्बेक इति विश्वरूप इति च पर्यायनामनी इति स्पष्टमभिदधाति । एवं चिद्विलासयति-रपि शंकरविजयविलासे—

"ददौ मण्डनमिश्राय संन्यासं जितरेतसे ।
सुरेश्वराचार्य इति मुद्राभिख्यां ददौ तदा ॥"

इति मण्डनमिश्रस्यैव सुरेश्वराचार्याभिख्यां ख्यापयति । एवम् अनन्तानन्दगिरिरपि शंकरविजये कुमारिलेनावेदिता भगवत्पादा मण्डनमिश्रमभिगम्य तेन सह वादमारचयन्; तं पराजित्य संन्यासाश्रमं ग्राहयामासुः; तस्य सुरेश्वरसंज्ञां चादधुरिति निःसंदिग्धं वर्णयति । एवमेभिराप्तवचनैर्मण्डनमिश्रविश्वरूपसुरेश्वरसंज्ञा एकस्यैवेति सुस्पष्टमवगम्यते ।

यद्यपि गुरुवंशकाव्यात् मण्डनमिश्रसुरेश्वरयोर्भेदो विद्यमान इवापाततः प्रतीयते, यतस्तत्र कौमारिलवचनात्प्रयागमभिप्रस्थितानां श्रीभगवत्पादानां मध्येमार्गं मण्डनसमागमः, मण्डनायाद्वैततत्त्वोपदेशः, प्रयागे विश्वरूपेण सह वादः, विश्वरूपस्य संन्यासाश्रमे सुरेश्वरसंज्ञाकरणं चाभिधीयते; तथापि विमर्शे क्रियमाणे नास्ति तत्र तयोर्भेदावबोधस्यावकाशः । अस्मिन् संदर्भे गुरुवंशकाव्यगतं वृत्तान्तं किंचिदिव विचारयामः— एतत्कर्ता काशी लक्ष्मणशास्त्री द्विशतेभ्यो वत्सरेभ्यः पूर्वं श्रीशृङ्गगिरिभद्रपीठमातस्थुषां श्रीसच्चिदानन्दभारतीसंयमीन्द्राणां सभायां विद्वानवर्तत । तदैव तेनैतत्काव्यं निरमायि । काव्यस्यास्य मुद्रापणाय यदेतः सप्तविंशतिवत्सरेभ्यः पूर्वं श्रीशृङ्गगिरिभद्रासनमातस्थिवद्भिः श्रीसच्चिदानन्दशिवाभिनवनरसिंहभारतीस्वामिभिः श्रीमान् श्रीरङ्ग-बालसुब्रह्मण्यार्यमहाशयो नियोजितस्तदा मुद्रणावसरे

मण्डनमिश्रवृत्तान्तगतमापाततः प्रतीयमानमिमं विसंवादमधिकृत्य श्रीस्वामिनो निवेदिता एवमभिदधुः— मण्डनमिश्र इति न कस्यापि विशिष्य काचित् संज्ञा ; किंतु यस्मिन् कस्मिन्नपि तन्त्रे प्रस्थाननिर्वाहकाणां विदुषां तत् साधारणं विरुदमभूत् । अतो मध्येमार्गमागतो मण्डनोऽन्यः, यः किल आचार्यदर्शनात्पूर्वमेवाद्वैतवेदान्ते बद्धादरः गृहस्थ एव भूत्वा कालमयापयत् । प्रयागे वादोपनिबद्धो विश्वरूपाभिधानो मण्डनोऽन्यः, यः किल कर्ममार्गे निरतः मीमांसकः वादजयानन्तरं संन्यासं प्रापितः सुरेश्वरसंज्ञामवापेति । अनेन वृत्तान्तेन मन्यामहे तयोर्भेदवादे गुरुवंशकाव्यालम्बनप्रत्याशा गर्भस्रावं स्रुतेति ।

श्रीव्यासाचलकृते शंकरविजये विश्वरूपेण यत्याश्रमस्वीकारानन्तरं श्रीभगवत्पादसंनिधौ निवेदितं वचनमेवं दृश्यते— 'मया पूर्वाश्रमे बहवो ग्रन्था विरचिताः । तत्र यद्यपि मम मतभेदो दृश्येत, तथापि संप्रति श्रीमतां चरणसरोजसंसेवनेन श्रीमतामद्वैतप्रस्थानमेवावलम्बे । नराणां बाल्ययौवनवार्धकेषु दृश्यत एव भिन्नभिन्नोऽभिनिवेशः' इति । एतेन ब्रह्मसिद्धिबृहदारण्यकवार्तिकादीनां परस्परं मतभेदमवलम्ब्य तत्कर्तुः भेदसाधने अनैकान्तिकत्वमुद्भावितं भवति ।

अपि च—सन्त्वन्या युक्तयः, इदमेकमेवालं तयोरैक्यसाधन इति कृत्वा ब्रह्मसिद्धिवार्तिकयोः परस्परमत्यन्तसादृश्यं किंचित्प्रदर्शयामः । तथाहि—

| ब्रह्मसिद्धिः | संबन्धवार्तिकम् |
| --- | --- |
| १ भेदः परस्परानात्मस्वभावः । स चेत् वस्तुनः स्वभावः वस्तूनामभावप्रसङ्गः<br>४७–२४. | वस्तुनो भेदरूपत्वे वस्त्वभावः प्रसज्यते ।<br>१५४ |
| २ अर्थक्रियाकृते भेदे<br>रूपभेदो न लभ्यते ।<br>दाहपाकविभागेन<br>कृशानुर्न हि भेदवान् ॥<br>५८–२१ | दाहपाकप्रकाशादि-<br>भेदेऽप्यग्नेरभिन्नता ।<br>कार्यतोऽपि न भेदः स्या-<br>द्वस्त्वभेदव्यवस्थितेः ॥<br>१५७ |
| ३ यथैव भिन्नशक्तीना-<br>मभिन्नं रूपमाश्रयः ।<br>तथा नानाक्रियाहेतु<br>रूपं किं नाभ्युपेयते ॥<br>५६–३. | विभिन्नकार्यकर्त्रीणां<br>शक्तीनां यद्वदाश्रयः ।<br>न विरुद्धोऽग्निरेकोऽपि<br>तद्वत्कार्येऽपि किं न ते ॥<br>१५८ |
| ४ अथाविवक्षितार्थत्व-<br>निवृत्त्यै प्रार्थ्यते विधिः ।<br>अर्थो ज्ञातव्य इत्युक्ते<br>ज्ञेयः स्यान्नाविवक्षितः ॥<br>७६–२४. | अविवक्षितनुत्यर्थ-<br>मथात्र विधिरिष्यते ।<br>अयं ज्ञेयोऽर्थ इत्युक्तौ<br>स्याद्विवक्षितधीर्यतः ॥<br>६६६ |

५ तस्यापि शब्दपूर्वत्वा-
दनुमानैकगोचरः ।
कस्मान्न शब्दबोधोऽपि
ह्यनुमानपुरःसरः ॥
१०४-१२.

तस्यापि शब्दपूर्वत्वा-
दनुमानैकगोचरः ।
कस्मान्न शब्दबोधोऽपि
ह्यनुमानपुरःसरः ॥
७३७

६ क्व च प्रमाणमेषोऽर्थो
न यागादौ स्वशब्दके ।
लौकिकेऽपूर्वसंसर्गः
श्रोतुरस्त्यविधावपि ॥
१११-१

क्व चेष्टमस्य मानत्वं
न यागादौ स्वशब्दके ।
लौकिकोऽपि न संसर्गो
विध्यायत्तः स्थितो यतः ॥
७५१



# ४

## ॥ श्रीचन्द्रशेखरभारतीस्वामिनः ॥ *

[ बि. ए. बि. एल्. डिस्ट्रिक्ट् जड्ज् इत्यादिबिरुदभाजा
एन्. चन्द्रशेखरार्येण बिरचितम् ]

शृङ्गगिरिर्नाम महीशूरदेशे तुङ्गापगातीरे विराजमानो रमणीयः कश्चन प्रदेशः । प्रदेशोऽयमद्वैतविद्यापरमाचार्येण श्रीशंकरभगवत्पादेनानुगृहीत इत्यनितरसाधारणोऽयं समुत्कर्षोऽस्य स्थानस्य । अत्रैव श्रीशंकरभगवत्पादैः प्रयागे वादविजितो मण्डनमिश्रः परिव्रज्यां प्रापय्य सुरेश्वरनाम्ना अद्वैतविद्याप्रवर्तकास्थान्यां संनिवेशितः । अत्रैव च विजयनगरराजधर्मोपदेशको विद्यारण्यः श्रीशारदापीठमुपकल्पयामास । तदिदमास्थानं बहव आचार्या अलंचक्रुः । अचिरादेव आदिशंकराचार्यात् द्वात्रिंशाः श्रीनरसिंहभारतयतीन्द्राः स्थानमिदमलंकृत्य ब्रह्मभूयं गताः । अद्यत्वे स्थानमिदमलंकुर्वाणाः श्रीचन्द्रशेखरभारतीन्द्राः सप्तविंशतेर्वत्सरेभ्यः पूर्वम् आस्थानमिदमध्यारोहन् । वसिष्ठवामदेवादिवत् एते आचार्या ज्ञानानुष्ठानशेवधयो जाग्रतीति नूनमस्माकमिदं परमं भागधेयम् । पदवाक्यप्रमाणेष्वेषां ज्ञानमनितरसाधारणम् । एतैः विवेकचूडामणेर्व्याख्यानं विद्वदभिनन्दनीयं विरचितं न चिरात् प्रकाश्येत । अस्मिन् भारतवर्षे अद्यापि धर्मः अनुवर्तत इत्येतत् एतेषां भगवदवतारपुरुषाणां महिम्नैवेति सुधीरमुद्घोषयामः ॥

५

# भौतिकाध्यात्मशास्त्रतत्त्वाविरोधः॥*

[ बि. ए., बि. एल्., दिवान् बहदूर् इत्यादि बिरुदाङ्कितेन श्रीसुन्दररामतनूजेन श्रीरामस्वामिशास्त्रिणा विरचितः ]

सदाचार्योपदिष्टैः शास्त्रैरात्मज्ञानं संपादनीयमिति सर्वाभ्युपगतोऽयं विषयः। यतः श्रुतिरेव— "नावेदविन्मनुते तं बृहन्तम्" "आचार्यवान् पुरुषो वेद" इति वदति। एवं शास्त्रैर्ज्ञानं संपाद्य अनुकूलैस्तर्कैस्तत् समुपबृंहयेत्। यथाह मनुः—

"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥"

आधुनिकाः केचित् भौतिकं शास्त्रमध्यात्मशास्त्रेण विरुध्यत इति वदन्ति। तन्नूनं तत्त्वानवबोधनिबन्धनमिति ब्रूमः। व्यवहारिकसत्तादशायां अचिज्जीवेश्वराः परस्परं मिश्रिता वर्तन्ते। तत्र यद्यत् भौतिके शास्त्रे वर्तते तत्सर्वम् अचित्पदार्थं विषयीकरोति। अध्यात्मशास्त्रं तु जीवमीश्वरं चेति कुतो विरोधः। यदायमात्मा पञ्चकोशविनिर्मुक्तो भवति तदा मुक्तो भवति परमार्थसत्यं अखण्डैकरसमानन्दमनुभवति च। तस्मान्नैव विरोधो भौतिकाध्यात्मशास्त्रयोः॥

६

# ॥ किंचित्पूर्ववृत्तम् ॥

[ महामहोपाध्याय-वेदान्तभूषण-शास्त्ररत्नाकरादिबिरुदभाजा करुङ्कुलग्रामवास्तव्येन ब्रह्मश्रीकृष्णशास्त्रिणा विरचितम् ]



सदाख्ययात्मकलया चन्द्रशेखरदेशिकः ।
ऋष्यशृङ्गाचलावासि शारदामोदितो यतिः ॥ १ ॥

भिक्षाटनपुरे पूर्वमटन् भिक्षां यतीश्वरः ।
निगमान्तसारसर्वस्वबोधनार्थं स्वयं गुरुः ॥ २ ॥

चतुर्भ्यो भिक्षमाणेभ्यस्तत्रैवोपदिदेश ह ।
तस्मात् तदन्यः को नाम शास्त्रतत्त्वार्थबोधने ॥ ३ ॥

समतां यातु नैवेति मतिर्मम गरीयसी ।
तत्रैको वैद्यनाथाख्यो विरूपाक्षस्तथाऽपरः ॥ ४ ॥

तृतीयो दण्डपाणिः स्याच्चतुर्थो कृष्णनामकः ।
भिक्षाटनपुरादेव भिक्षां प्रापुर्यथासुखम् ॥ ५



७

# श्रीशंकराचार्यावतारः ॥[१]

[ बि. ए. बि. एल्. हैकोर्ट् जड्ज्. इत्यादिबिरुदालङ्कृतेन कडयग्रामाभिजनेन अनन्तशयनस्थ–शेषार्येण विरचितः ]



चिरस्य जातं खलु सुप्रभातं
  जातोऽधुना शंकरदेशिकेन्द्रः ।
येनास्तमन्धं तमसं जनानां
  भग्नाः कथा बाह्यवदावदानाम् ॥ १ ॥

ब्रूमः कथं कालडिनामकस्य
  क्षेत्रस्य भाग्यं सुरलोकमृग्यम् ।
अभूद्यदेतत् पदपद्मरेणु-
  पवित्रितं शंकरदेशिकस्य ॥ २ ॥

जगद्गुरुः सोऽयमुदारभूमा
  नावातरिष्यद्यदि मर्त्यलोके ।
जीवेशयोरैक्यमलीकभावो
  विश्वस्य चाज्ञास्यत नागमोत्थम् ॥ ३ ॥

चिराय तन्नाम जयत्वमुष्य
  सिद्धान्तसारो विलसत्विलायाम् ।
श्लेम्ना महिम्नोऽस्य गुणो बुधानां
  श्रुत्यन्तनिध्यानपरश्च कास्तु ॥ ४ ॥



।। श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनः ।।



श्रीचन्द्रशेखरभारतीस्वामिनः

## ८

# श्रीचन्द्रशेखरभारतीमधुराविजयः ॥

[बि. ए., बि. एल्. अड्वोकेट् इत्यादिबिरुदभाजा मधुरा-
वास्तव्येन के. आर् वेंकटरामार्येण विरचितः]



तिष्ठतीव दृशोरग्रे मधुरायामलम्भि यत् ।
चन्द्रशेखरभारत्या दर्शनं पापकर्शनम् ॥ १ ॥

किं ब्रूमस्तस्य सौभाग्यं मधुरानगरस्य यत् ।
श्रीस्वामिचरणाम्भोजरेणुभिः पूततामगात् ॥ २ ॥

धिग्जन्म देहिनस्तस्य येनालोकि न मुक्तिदम् ।
मीनाक्षीपूजनं तत्र स्वामिवर्यैरनुष्ठितम् ॥ ३ ॥

कदा नु खलु सेवेय स्वामिनां वदनाम्बुजम् ।
निरुपाधिकृपापूरतरङ्गितवचोऽमृतम् ॥ ४ ॥

अनुगृह्णातु मां श्रीमच्चन्द्रशेखरसंयमी ।
निरर्गलमधुस्यन्दिस्वाङ्घ्रिपद्ममधुव्रतम् ॥ ५ ॥



# ९

# श्रीचन्द्रशेखरभारतीस्वामि-गुणातिशयः ॥

[एम्. ए., बि. एल्. अड्वकेट्, मीमांसारत्नम्, इत्यादिबिरुदभाजा
ए. वि. गोपालाचार्येण विरचितः]

'क्वचित् क्वचित् महाभागाः...... कलौ खलु भविष्यन्ति' इति श्रीभागवतद्वादशस्कन्धपठितश्रीशुकमञ्जुवचनस्य लक्ष्यभूताः, श्रीमच्चन्द्रशेखरभारतीयतिशेखराः, जगद्वन्दितास्तद्गुरवः सुगृहीतनामानः श्रीनृसिंहभारतीचरणाश्च। 'गुणैर्दास्यमुपागतः' इति श्रीलक्ष्मणोक्तरीत्या गुणक्रीतोऽयं दासजनः श्रीनृसिंहभारतीतीर्थपादानाम्। भूयिष्ठमन्वभाविषतानेन दासेन तन्मुखारविन्दविनिर्गलितमधुमधुरफणितयः, कृपाभरिततत्प्रेमकटाक्षाः, दक्षिणापथजाह्नव्या मरुद्वृधायाः सैकते जलाभ्यर्णनिर्मितपर्णशालायां तदन्तरङ्गपरिजनपरिवारमध्यपरिगणनभाग्यलाभात्, विविक्ते तैः चिराभ्यासलब्धलाघवेन क्लेशलेशं विना अनुभूताया ब्रह्मानन्दरसघननिर्विकल्पसमाधिनिष्ठायाः साद्भुतं सानन्दमवलोकनभाग्यं च। 'न कारणात् स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात्' इति दिलीपरघुविषयप्रोक्तरीत्या स्वगुरूणामनुकुर्वन्तः विशुद्धवैराग्यविज्ञानादिमहागुणैः त-

न्निर्विशेषाः श्रीचन्द्रशेखरयतिशेखरा आसत इति सुविदित-मेवाभिज्ञलोकस्य । 'तस्मात् पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इत्यनुशशास मातापितृसहस्रेभ्यो वत्सलतरा बार्हदारण्यकश्रुतिः । सत्यपि महति पाण्डित्ये स्वमाहात्म्या-त्यन्तगोपनं, मनागपि तस्य अनाविष्करणम्, अप्ररूढेन्द्रि-यत्वं, शिशुजनवत् भावशुद्धिः इत्यादिबाल्यगुणाः पण्डि-तस्य सुतमां दुःशका इति ज्ञात्वैव माता श्रुतिः 'माऽस्तु बाल्येनावस्थानं, तिष्ठतु तत्, बालवदवस्थाने इच्छामात्र-मवलम्बतां पण्डितः, तावन्मात्रेण सन्तुष्यामि' इति स्वाशयं प्रदर्शयन्ती सन्घटितं विधिशब्दं प्रयुयुजे । "शिष्टं बाल्येन तिष्ठासनमपि विदुषो बालकृत्यं तदस्तु प्राप्तुं बालस्य भावे न तु सुशक इति स्वैरिताऽस्येति चेन्न । दुश्चारित्रादमुं नाविरत इति वचः संनिरुन्धे ह्यतोऽस्मिन् माहात्म्यं स्वं निगूहेदिति मुनिविहिते बाल्यविध्याशयः स्यात्" इति अधिकरणसारावल्यामनाविष्काराधिकरणं संगृह्णन्तो वेदान्ताचार्याः स्वधर्ममविहायैव तिष्ठासनं शिष्ट-मिति संग्रहश्लोकं निबबन्धुः । वयोऽवस्थाविशेषरूपं मुख्यं बाल्यमपि यूना वृद्धेन च पण्डितेन कदाचित् लब्धुं शक्येतापि, अनया श्रुत्या विधित्सिता बालस्वभावलब्धिः सुतरां दुःशकेति सुप्रसिद्धम् । अस्मत्स्वामिनस्तु प्रायि-कमिमं लोकदृष्टमुत्सर्गं सर्वथा अतीत्य, प्राप्यापि पाण्डि-त्यं निरवशेषं, विद्यासहकारित्वेन श्रुविशिष्टस्य बाल्यस्य, 'अथ मुनिः' इति श्रुतिविहितसहकार्यन्तरस्य मौनस्य

'अथ ब्राह्मणः' इति श्रुतिप्रदर्शितस्य ब्राह्मण्यस्य सम्पूर्णसिद्धया ब्रह्मानुभवसागरनिमग्नाः ब्रह्मभूयदशाप्राप्त्यापरिच्छिन्नानन्दभाजो मुक्ततुल्या इति सुदृढं प्रतिज्ञातुं शक्यम् । ईदृशान् ब्रह्मनिष्ठाधौरेयानेव प्रशंसति आनन्दवल्ली 'रसꣳह्येवायं लब्ध्वाऽऽनन्दी भवति' इति । एकस्यां निशि श्रीराघवपादुकाप्रशंसारूपमेकमेव विषयमधिकृत्य श्लोकसहस्रप्रणयनं प्रतिज्ञातवद्भिः श्रीवेङ्कटनाथकविभिः स्तोत्रारम्भे

"रङ्गक्ष्मापतिरत्नपादु भवतीं तुष्टूषतो मे जवा-
ज्जृम्भन्तां भवदीयशिञ्जितसुधासन्दोहसन्देहदाः ।
श्लाघाघूर्णितचन्द्रशेखरजटाजङ्घालगङ्गापय-
स्सासादेश विशृङ्खलप्रसरणोत्सिक्ताः स्वयं सूक्तयः ॥"

इति भागीरथीनिर्झरसम्मितस्वच्छस्वाद्ववदातवाचः प्रार्थयन्त । चन्द्रशेखरजटानिपतद्गङ्गाप्रवाह एव सदृशमुपमानं स्यात् श्रीचन्द्रशेखरयतीश्वरमुखारविन्दनिर्गलन्मधुनिष्यन्दभूतानां शीतमधुरवाचाम् । "वाचां प्रवाहैरनिवारितैस्ते मन्दाकिनीं मन्दयितुं क्षमन्ते" इति श्रीदेशिकवर्णितवाग्मितायाः प्रथमोदाहरणमस्मत्स्वामिनः । संस्कृतभाषाव्यवहारे निस्समाः स्वामिन इति सुदृढं प्रतिज्ञातुं शक्यम् । श्रीमत्स्वामिभिः प्रकाशितायामास्तिकमतोज्जीविनीपत्रिकायां तैरनुगृहीता व्यासा अत्र प्रमाणम् । मितंपचेन दासजनेन प्रबोधचन्द्रोदयनाटकस्य व्याख्यां लेखयित्वा कृपया स्वयं परिशोध्य तस्यां पत्रिकायां प्राचीकशन्निति यत् तत् ध्रुवं

तेषां गाम्भीर्यादिमहागुणान् प्रख्यापयति ।

"सिद्धं सत्सम्प्रदाये स्थिरधियमनघं श्रोत्रियं ब्रह्मनिष्ठं
सत्त्वस्थं सत्यवाचं समयनियतया साधुवृत्त्या समेतम् ।
दम्भासूयादिमुक्तं जितविषयगणं दीर्घबन्धुं दयालुं
स्खालित्ये शासितारं स्वपरहितपरं देशिकं भूष्णुरीप्सेत् ॥"

इति श्रीमद्वेदान्तार्यवर्णिता आचार्यगुणाः सर्वे समुदिता अस्मत्स्वामिनि । पारमहंस्यपरिग्रहादारभ्य अद्य सप्तविंशतिहायनो यतिशेखरः युवा, साधु युवाध्यापकः, सततमाशिष्ठो द्रढिष्ठो बलिष्ठः सन् मधुमत्तमया स्वजिह्वया ब्रह्मविद्यापीयूषधाराः वर्षयन् जगदाचार्यपीठं वर्षशतमलङ्कुर्यादिति प्रार्थ्यते दासजनेन ॥



## १०

# ॥ अद्वैतमते अविद्याविलसितम् ॥

[ मद्रनगरीराजकीयप्रधानकलाशालासंस्कृताध्यापकेन
वै, कृष्णमाचार्येण विलिखितम् ]

---

अविद्या हि तथा निरुच्यतेऽद्वैतिभिर्यथा सेयमेकाकिन्यद्वैतमतोपरि परैरुद्भावितानां दोषाणामखिलानां प्रायशः प्रतिविधानमातन्वती कामदुघा संपद्यते। इत्थं हि तेषां प्रक्रिया— सर्वविकल्पातीतं परं ब्रह्मैव परमार्थः। अन्ये सर्वेऽपि विकल्पगोचरा पदार्था मिथ्याभूताः। प्रमाणपदमूर्धाभिषिक्तेन प्रत्यक्षेण गृह्यमाणानां पदार्थानां प्रतीतिसिद्धं सत्त्वं कथमपह्नूयत इति चेत्, दूरस्थेन पुरुषेण पर्वते योग्यानुपलम्भगृहीतमग्न्यभावं कथमपह्नुषे ? तत्र धूमवत्त्वेन हेतुना वह्निमनुमाय वन्ह्यभावोऽपह्नूयत इति चेत्, अत्रापि दृश्यत्वेन हेतुना मिथ्यात्वं प्रसाध्य सत्यत्वं निरस्यत इति समम्। अत एव ब्रह्मणो दृश्यत्वे मिथ्यात्वं प्रसजेदिति बिभ्यती श्रुतिः

"न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्"

इति तस्य दृश्यत्वं प्रतिषेधति। पुरुषस्य दूरस्थत्वेन पर्वते सन्नपि वह्निर्न गृहीतः, अतो वन्ह्यभावग्रहो भ्रम इति चेत्, अत्रापि पुरुषेणाविद्योपहितेनासन्नपि प्रपञ्चः सन्निव गृह्यत इति

भ्रमत्वं तुल्यम्। अनुमानादिना भ्रमनिवृत्तिश्च तुल्या। 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायात् सहस्रमपि प्रमाणानि प्रत्यक्षमन्यथयितुं न प्रभवन्तीति चेत्— सत्यमेतत् यत्रादोषं प्रत्यक्षम्। प्रपञ्चविषयकं तु प्रत्यक्षं सदोषमित्युक्तम्। अविद्याख्यदोषकलुषितं हि तत्र प्रत्यक्षम्।

ननु केयमविद्या नाम, यदुपहितः पुरुषो बम्भ्रमीतीत्युच्यत इति चेत्— अस्त्यत्र पक्षद्वयम्। विद्यापरिपन्थिनी भावरूपेयमविद्येति विवरणानुयायिनः। अविद्याया भावरूपत्वे प्रमाणं तु प्रत्यक्षादिकम्। तथा हि 'अहमज्ञः' इत्यादि प्रत्यक्षं तावत्सर्वसंप्रतिपन्नम्। तत्र भावरूपमेवाज्ञानं भासत इति वक्तव्यम्। एवमनुमानमप्याहुश्चित्सुखाचार्याः— "देवदत्तप्रमा तत्स्थप्रमाभावातिरेकिणः। अनादेर्ध्वंसिनी मात्वादविगीतप्रमा यथा॥" इति। एवं "तम आसीत्" "मायां तु प्रकृतिं विद्यात्" इत्यादय आगमा अपि प्रमाणम्। भावरूपाज्ञानस्य लक्षणमपि चित्सुखाचार्यैरुक्तम्—

"अनादि भावरूपं यद्विज्ञानेन विलीयते।
तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षते॥"।

इति तस्मात् प्रमाणसद्भावात् लक्षणसंभवाच्चास्ति भावरूपाविद्या।

मण्डनादयस्तु तां सदसद्विलक्षणामनिर्वचनीयामाचक्षते। अनिर्वचनीयत्वं च 'इदमित्थम्' इति निर्वचनानर्हत्वम्। सद्विलक्षणत्वे सति असद्विलक्षणत्वे सति सदसद्विलक्षणत्वमिति यावत्। इदमेकमस्मिन् मते अविद्याविलसितम्—यदियं न सती नासती नापि सदसती। ननु सदसद्विलक्षणेति निर्ब्रुवन्नेव कथं तामनिर्वचनीयां ब्रवीषीति चेत्— सत्त्वेन

वा असत्त्वेन वा निर्वचनानर्हत्वमनिर्वचनीयत्वमिति वदामः। सैषा माया अविद्या मिथ्यावभास इत्यादिपदैः व्यवह्रियते। अविद्याया द्वे शक्ती वर्तेते— आवरणशक्तिर्विक्षेपशक्तिश्चेति। आवरणशक्तिप्राधान्ये अविद्येति व्यवहारः। विक्षेपशक्तिप्राधान्ये मायेति व्यवहारः। ब्रह्मैकमेव परमार्थसदपि मायाशबलितमीश्वर इत्युच्यते। अविद्योपहितं जीव इत्युच्यते। तत्रेश्वरोपाधिभूता माया एकैव। तस्मादीश्वरोऽप्येक एव। मायागुणानां सत्त्वरजस्तमसां वैविध्यात्तु ब्रह्मविष्णुरुद्रव्यवहारः। जीवोपाधिरविद्याप्येकैवेति विवरणानुयायिनः। अतस्तेषां मते जीवोऽप्येक एव। सा नानेति मण्डनानुयायिनः। अतस्तेषां मते जीवा अनेके।

इदं विचार्यते— कस्येयमविद्या; किं ब्रह्मणः, उत जीवानामिति। अत्राप्यास्ति पक्षद्वयम्— ब्रह्मण एवेयमविद्या; ब्रह्मैवाविद्याश्रयः स्वाविद्यया संसरति, स्वविद्यया च मुच्यत इति वार्तिकमतम्। जीवानामेवेयमविद्या; जीवा एवाविद्याश्रयाः स्वाविद्यया संसरन्ति, स्वविद्यया च मुच्यन्त इति मण्डनमतम्। यद्यप्यविद्याकल्पितो जीवविभागः, जीवाश्रया च कल्पनेत्यन्योन्याश्रयः प्रसजेत्, तथापि मायामात्ररूपायामविद्यायां नैष दोषः। यद्यविद्या नाम वस्तु किंचन स्यात् ततो नासिद्धा जीवसिद्धये प्रभवति, जीवं च विना न तत्सिद्धिरित्यन्योन्याश्रयः स्यात्। मायामात्ररूपा ह्यविद्या। न हि मायायामनुपपत्तिर्दोषाय। अनुपपद्यमानार्थैव हि माया। उपपद्यमानार्थत्वे मायैव न स्यात्। अतोऽनुपपद्यमानता मायाया भूषणं न तु दूषणमिति मन्तव्यम्। इदमप्यपरमस्मिन् मते अविद्याया विलसितम्। अपि च अविद्येयमनादिरभ्युपगम्यते। अतो बीजाङ्कुरवदनादित्वादन्योन्याश्रयः परिहरणीयः।

ननु 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति हि न्यायविदः। तथा चेश्वरस्य प्रपञ्चसर्गे किंचित्प्रयोजनं वाच्यम्। तच्च न तावत्परेषामनुग्रहः, सर्गात् प्राक् परेषामभवात्। परेषां विद्यमानत्वे हि तेषामनुग्रहाय सर्गः, कर्तव्यः। अपिच परानुग्रहार्थत्वे 'सृजेच्च शुभमेवैकमनुकम्पाप्रयोजितः' इत्युक्तरीत्या दुःखिनां सृष्टिर्न युज्येत। नाप्यात्मार्था लीला, तस्याप्तकामत्वात्। अनाप्तकामानां हि क्वचित्कामनया प्रवृत्तिर्युज्यते। तथा चाहुः— 'क्रीडार्थायां प्रवृत्तौ हि विहन्येत कृतार्थता' इति,— इति चेत्, अत्राप्यविद्याविलसितमेव प्रभवति समाधातुम्। नाविद्या प्रयोजनमपेक्षते। मायाशबलं हि ब्रह्म ईश्वरभावमापन्नं लोकान् सृजति। तत्र प्राप्ताप्राप्तविवेकनयेन मायाकार्यमेव प्रपञ्चः। तत्र मायानिष्पन्नस्य न किंचित्प्रयोजनं वर्णनीयम्। न हि गन्धर्वनगरादयो विभ्रमाः कस्मैचित्प्रयोजनाय भवन्ति।

ननु सर्वविकल्पातीतं ब्रह्मैव प्रपञ्चरूपेण विकुरुत इत्येतन्नोपपद्यते। यादृशी प्रकृतिस्तादृश्यैव हि विकृत्या भाव्यम्। न हि हेम्नो विकृतिरायसी भवति। अतो ब्रह्मैव प्रपञ्चात्मना विकुरुत इति कथं संगच्छतामिति चेत्— अत्राप्यविद्यैव प्रतिविधास्यति। यतः सर्गोऽविद्यानिबन्धनः, ततो नेयमनुपपत्तिरिति। माया हि नाम किं किं न कुर्यात्।

इत्थमद्वैतमते अविद्याविलसितं बहूपकरोतीति मन्तव्यम्॥



## ११

# ॥ सद्गुरुषोडशी ॥

( मथुरापुरिवास्तव्येन मुम्बापुरीस्थपत्रिकाप्रकटनाध्यक्षेण श्रीगुरुपादुकाशेखरेण मन्त्रेश्वरशर्मणा विरचिता )



शिवस्वरूपमिन्दुकान्तिशोभितं शिवंकरं
शिवाच्युताम्बुजोद्भवात्मकं मदान्तकप्रभुम् ।
द्विजार्चितं प्रजामहीमहेन्द्रसंश्रितांघ्रिकं
शृङ्गशैलपीठनाथमाश्रयामि सन्ततम् ॥ १ ॥

देशिकेन्द्रचन्द्रशेखराभिधानशोभिते
श्रीनृसिंहभारतीशहस्तपद्मसंभृते ।
शंकरार्यसद्गुरुप्रतिष्ठितादिपीठगे
खेलतु प्रतिक्षणं मनो मदीयमन्वहम् ॥ २ ॥

चाक्षुषाख्यया सुदीक्षयैव मां पुरा प्रभु-
र्यः क्षणेऽकरोद्द्विजिष्यमक्षराम्बिकात्मकः ।
मीननेत्रया प्रवृत्तयाज्ञयाश्रितो मया
लोकदेशिकं तमेकमेव सन्ततं भजे ॥ ३ ॥

दण्डपाणिमण्डकोटिमण्डलार्चिताङ्घ्रिकं
वैदिकाध्ववैरितूलचण्डमारुतं प्रभुम् ।
चण्डिकासरोजपादपूजकं बुधाग्रणी-
ऋष्यशृङ्गमौनिराट्तपोवनेश्वरं भजे ॥ ४ ॥

भस्मपुण्ड्रपावकत्रिरेखया विराजितं
सुधामयूखशेखराक्षमालया स्फुरद्गलम् ।
गुणत्रयात्मरेखयाऽप्यलंकृताब्जपीठगं
चन्द्रशेखरार्यदेशिकं तमेकमाश्रये ॥ ५ ॥

आत्मरूपदर्शने सदाऽपि तुष्टमानसं
भावनाख्यवेदशीर्षभावनाविशारदम् ।
पावनात्मविद्यया प्रकाशिताब्जवक्त्रकं
देशिकेन्द्रचन्द्रशेखरार्यराजमाश्रये ॥ ६ ॥

हस्ततालमोदनेन वृष्टिकारकं प्रभुं
चक्रराजनायिकासमर्चकं तमोहरम् ।
शुद्धविद्ययाश्रितात्मशुद्धतत्त्वबोधकं
चन्द्रशेखरार्यदेशिकं भजे विमुक्तये ॥ ७ ॥

देवकीसुतेन सत्त्वमार्गपालनेच्छुना
प्रेषितं सुवर्णपक्षमामनन्ति यं गुरुम् ।
पन्नगबन्धने प्रभुं परात्मदर्शन-
प्रदं तमाश्रयामि चन्द्रशेखरार्यदेशिकम् ॥ ८ ॥

शिलासुवर्णयोर्दरिद्रवित्तशालिनोस्तथा
पङ्करत्नयोश्च मूर्खविज्ञयोर्जडार्ययोः ।
यक्षरक्षसोर्धुरीणमानुषाख्ययोरसौ
समप्रवृत्तिको जयत्यवाप्य मानसं गुरुः ॥ ९ ॥

धनेन कर्मणा प्रजाभिरोपदार्थमव्ययं
कदाऽपि वा च न स्मरेदिति प्रबोधकं प्रभुम् ।
ज्ञानकारकं नतार्तिहारिणं सदा हृदा
कदा भजेऽञ्जलिं वहन्गुरुं भवाब्धितारकम् ॥ १० ॥

विरागलोकसेवितं विरक्तिमार्गसूचकं
विद्ययाविलासवन्मुखं विनीतिनायकम् ।
विशङ्कटं विशारदं विशल्यभोगदायकं
विशुद्धतत्त्वमानसं नमामि देशिकप्रभुम् ॥ ११ ॥

मन्दहासरम्यदन्तपङ्क्तिशोभिताननं
बिन्दुतत्त्वबोधकं निरन्तरेण योगिनाम् ।
अन्धकारपापहन्तृभास्करं शिवाऽद्वयं
बन्धमोचकं तमेकमाश्रयामि सद्गुरुम् ॥ १२ ॥

पादुकाऽमृतेन सर्वनम्रलोकरक्षकं
चाक्षुषामृतेन मोहनाशकं सदा नृणाम् ।
वाचिकामृतेन नैगमानुकूलशिक्षकं
मातृकाक्षरामृतात्मकं नमामि सद्गुरुम् ॥ १३ ॥

अखण्डमण्डलेश्वरातिखण्डमन्त्रबोधकं
त्रिकुण्ठकुण्डलीशयात्मकं महाशिवार्चकम् ।
महाण्डकोटिमातृकाङ्घ्रिपङ्कजे सुभक्तिदं
प्रचण्डदुःखहारिणं शरण्यमाश्रये गुरुम् ॥ १४ ॥

तुलाख्यमेचके मखस्य संक्रमे समुद्भवं
सुमेषकुम्भगषष्ट्युपागमेऽभिषिक्तमासने ।
सुखप्रदं नमस्ततः शिवं शिवप्रदायकं
सुचन्द्रशेखरार्यदेशिकं तमेकमाश्रये ॥ १५ ॥

तवाङ्घ्रिपद्मयोरिमां नवां स्तुतिं समर्पये
गृहाण नम्यशारदाख्यपीठमध्यग प्रभो ।
सदाऽत्र मां सदाशिव श्रुते रहस्यबोधनैः
पुनर्नमामि देशिकेन्द्र चन्द्रशेखरार्य भोः ॥ १६ ॥



# १२

## ॥ शृंगगिरौ श्रीविद्यातीर्थपादाः ॥*

[ मद्रपुरीराजकीयप्रधानकलाशालायां भारतवर्षचरित्राध्यापकेन एम्. ए. बिरुदभाजा एस्. वि. वेङ्कटेश्वरार्येण लिखितम् ]

स्थाने खलु विद्यातीर्थपादाः शृङ्गगिरिमद्वैतप्रवचनस्य समुचितं स्थानमकल्पयन्, यदेतत् क्षेत्रं नैकविधैरनोकहनिवहैर्विविधाभिरोषधीभिः स्थलरामणीयकेन जलरामणीयकेन च न केवलं पश्यतां नयनासेचनकं परं मनःशान्तिकरमपि। क्रि. प. १३८० तमे वत्सरे विद्यातीर्थपादानधिकृत्य प्रवृत्तं शिलाशासनं तेषां स्वामिनां महिमातिशयमाविष्करोति। विद्यारण्यकृतात् राजकालनिर्णयात् अन्येभ्यश्च चरित्रग्रन्थेभ्यः कश्चन वृत्तान्त इदंप्रथमतयाऽस्माभिर्विज्ञायते। यथा क्रि. प. १३२५ आरभ्य १३९२ पर्यन्ते काले महमद् इबिन तघ्ळकू नामधेयः कश्चन म्लेच्छः हस्तिनापुरमशिषत्, यः किल स्वपितृघातीति बहुभिरमन्यत। रामनाथो नाम काम्पिलाधिपतिः क्रि. प. १३३५ तमे वत्सरे म्लेच्छराजेन तेन बलवदभियुक्तः स्वकीयं सर्वमपि द्रविणं मातङ्गशैले कृतनिवासाय विद्यातीर्थगुरवे संप्रेष्य स्वयं श्रिङ्गमठनामकं दुर्गमशिश्रियत्, परं तु भवितव्यताबलात् तेन म्लेच्छराजेन

ध्यापादितश्च । ततो हरिहरौ बुक्कश्च विद्यातीर्थगुरोस्तत् द्रविणमुपलभ्य क्रि. प. १३३७ तमे वत्सरे विजयनगर-राजधानीं निरमिमाताम् । अनन्तरवत्सरे (7—5—1337) हरिहरस्तत्राभिषिक्तोऽभूदिति । रामनाथराजेन शरणीकृतं श्रिङ्गमठनामकं स्थानं शृङ्गगिरिरेवेत्यस्माभिरुपपत्तिभूम्ना ऊह्यते । बुक्कमहाराजो विद्यातीर्थस्य भ्रुकुटिकिंकरोऽभूदिति विज्ञायते । बुक्कपार्थिवो विद्यातीर्थगुरुः वाराणस्या विद्यारण्यमानैषीत् । विद्यारण्यप्रेरितो बुक्कः शृङ्गगिरौ विद्यातीर्थ-गुरोर्बृन्दावनस्य कृते भूरि भूदानादिकं चक्रे । क्रि. प. १३७६ तमे वत्सरे हरिहरेण प्रवर्तितात् क्रि. प. १३७६ तमे वत्सरे बुक्केन प्रवर्तिताच्च शासनात् तावुभावपि विद्यातीर्थगुरोः नितान्तभक्ताविल्यवगम्यते । बिट्गुण्ठशासने विद्यातीर्थगुरुः श्रीकण्ठ इति व्यवह्रियते । एवं च विद्यातीर्थ-भारतीतीर्थ-श्रीकण्ठनामानि एकस्यैवेति विज्ञायन्ते । पराशरमाधवीयादिषु च विद्यातीर्थः श्रीकण्ठ इति व्यवह्रियते । काञ्चीकामकोटिपीठाधिपतिभिरादृतायां पुण्यश्लोकमंजर्यां जगद्गुरुरत्नमालिकायां च विद्यातीर्थः सर्वज्ञविष्णुरिति व्यवह्रियते । सायणमाधवः सर्वदर्शनसंग्रहे आत्मानं शार्ङ्गपाणितनयस्य सर्वज्ञविष्णोरन्तेवासिनमभिधत्ते । तर्कभाषाकारः चेन्नुभट्टः आत्मानं सर्वज्ञस्यानुजं सहजसर्वज्ञविष्णोरात्मजं चाभिधत्ते । तर्कभाषाकारेण सहजसर्वज्ञविष्णोरिति सहजपदप्रयोगात् अयं सर्वज्ञविष्णुः कस्यचित्सुप्रसिद्धस्य सुगृहीतनाम्नोऽनुज इति विज्ञायते । स एवायं

विद्यातीर्थगुरुः यस्यानुजः सर्वज्ञविष्णुस्तर्कभाषाकारेण निर्दिश्यते । अत इदं प्रतीमः— विद्यातीर्थः शार्ङ्गपाणेस्तनूजः । चेन्नुभट्टः विद्यस्तीर्थानुजस्य सहजसर्वज्ञविष्णोर्द्वितीयस्तनूजः, प्रथमस्तनूजः सर्वज्ञ इति ॥



अत्रेदमवधेयम्— विद्यातीर्थस्य सर्वज्ञविष्णुनामकत्वे सिद्धे तदनुजस्य सहजसर्वज्ञविष्णुनामकत्वं चेन्नुभट्टस्य तदात्मजत्वं च सिध्येत् । तदेव कथमिति विचारणीयम् । सर्वदर्शनसंग्रहकृता सर्वज्ञविष्णोः स्वगुरुत्वेन निर्देशादेव सेत्स्यतीति चेत्, हन्त प्रसिद्धात् सायणसोदरात् माधवादन्यः अयं सायणमाधवः सर्वदर्शनकृदित्यपि विमर्शपदवीमारोहति ।

# १३

# मम गुरवः श्रीचन्द्रशेखरभारती-स्वामिनः ।*

[बि.ए., बि. एल्. अड्वोकेट् इत्यादिबिरुदालंकृतेन पुण्यश्लोक-कृष्णस्वाम्यार्यतनुजेन बालसुब्रह्मण्यार्येण समर्पितम्]



स्वामिनामेतेषां सप्तविंशतिवत्सरान् श्रीशारदापीठमलंकुर्वतां महान्तमिमं नाक्षत्रमहोत्सवमपरोक्षयन्तो भक्ता वयमनितरसाधारणं भाग्यमुद्वहाम इत्यत्र नास्ति विशयलेशः । बाल्यादारभ्य स्वामिन एते सुगृहीतनामधेयैः पुण्यश्लोकैः श्रीनृसिंहभारतीस्वामिभिरात्मगुणेष्वध्यात्मविद्यायां वैराग्ये च सम्यगाहितविनया अधुना परमेण विज्ञानेन निरतिशयेन वैराग्येण स्पृहणीयेन सौशिल्येन च राजमानाः, मन्यामहे, नूनमानन्दयन्ति स्वाचार्यान् ब्रह्मभूयमापन्नानपीति । परमवैराग्यज्ञानानुष्ठानशेवधयोऽप्येते अज्ञमिवात्मानं प्रदर्शयन्तः 'बाल्येन तिष्ठासेत्' इति श्रुत्यर्थमनुष्ठानेन सर्वानपि शिक्षयन्ति । एतेषां स्मेरमाननं विदग्धा वाक् अभिगम्यतापादकं सर्वत्र समचित्तत्वं च सर्वेषां मनांस्याकर्षति ।

# १४

## ॥ श्रीगुरुमहिमा ॥

[ ताम्रपर्णीस्थकल्लिडैकुरुच्चिग्रामाभिजनेन वैदिकधर्मसंवर्धिनी-संस्कृतकलाशालाध्यक्षेण श्रीशङ्करशास्त्रिणा विरचितम् ]



प्रातः प्रातः स्मरणविषयं मल्लिकाद्यैः प्रसूनैः
भक्ताभक्तैर्नियतकरणैरार्चितं मूर्ध्नि भाव्यम् ।
ध्यायं ध्यायं गुरुवरपदाम्भोजयुग्माधिवासं
संसाराधिप्रशमनचणं पादुकायुग्ममीडे ॥

अस्ति किल शृङ्गगिरिनामा नगरी, यत्र हि ऋश्यशृङ्गो मुनिवरो विभण्डकेन पित्रा सह चिरं तपश्चचार ।

अत एव ऋश्यशृङ्गाश्रमः विभण्डकाश्रमश्च परिसरेऽस्या नगर्याः प्रकाशते ।

यत्र च तुङ्गा नाम सरिद्वरा उत्तुङ्गतरङ्गा स्नानपानादिना स्वाश्रितानां मनांसि उत्तुङ्गयमाना अन्वर्थं नाम वहन्ती प्रवहति । यस्याश्च रामणीयकमनितरसाधारणं दर्शं दर्शं प्रमोदेन भारती श्रीशंकराचार्यमनुसरन्ती प्रान्त एव वासमभिललाष । तस्या एतस्या भारत्या आज्ञया श्रीशङ्करगुरुवरः परमाचार्यः मध्यमभुवनस्य अद्वैतब्रह्मविद्यावशं गतं सुरे-

श्वराचार्यं शारदापीठमध्यष्ठापयत् । ततः क्रमेण विद्यारण्याचार्याः पीठमदसीयमलमकार्षुः ।

अथ महान्तो महनीयशमादिगुणसंपदो बहव आचार्यवर्याः पीठमिदं संभाव्य लोकानन्वगृह्णन् ।

बहोः कालादनन्तरं च श्रीश्रीनरसिंहभारत्यभिख्याना आचार्यवर्या योगेन निरतिशयेन स्वरूपं भावयन्तो निखिलानानन्दयन्तोऽनुजगृहुः पीठं शारदीयम् । तेषामनुग्रहसंजाताः अभिनवनरसिंहभारतीस्वामिपूज्यपादाः सच्चिदानन्दशिवालंकृताः जगत्पूज्याः शमादिसंपदा आत्मविद्यया मृगेन्द्रनादगम्भीरया मकरन्दरसमधुरया वाण्या च लोकान् आवर्जयन्तः पीठमलंकुर्वाणाः सर्वेषामानन्दमजीजनन् ।

अद्यत्वे हि तेषामनुग्रहेण मानसेन अनवद्याद्वैतमहाविद्याव्याख्यानसिंहासनं शारदं पीठं आत्मानन्दानुभवजननविशारदं संभूषयन्तो मार्कि प्राक् सप्तविंशतेः वत्सरेभ्यः तेषामेव गुरुवराणां निदिध्यासनेन समवाप्तनिखिलविद्यावैशारद्याः श्री श्री चन्द्रशेखरभारत्यभिधानाः ब्रह्मानन्दमनुभवन्तोऽन्तेवसतोऽप्यानन्दयन्तीति विदितमेव सर्वेषाम् । ते हि महान्तोऽन्तर्दृष्ट्या सन्ततनिर्वर्ण्यमानतेजोमयात्मस्वरूपानुभूतिसंजातहर्षाविर्भूतमन्दहासभरितवदनाम्बुजाः पदे पदे निरुद्धान्तःकरणसंभावितशाम्भवीमुद्रासमुन्मेषमुकुलितनयनारविन्दयुगलाः कदाचित् लोकानुग्रहाय केवलं बहिर्दृष्टिं प्रसार्य चरणाम्बुजसेवनार्थमुपस्थितानाश्रितान् कांश्चित्

अवलोकनेन कांश्चित् मन्दहसितेन कांश्चित् शिरःकम्पनेन कांश्चित् कुशलप्रश्नचातुर्या कांश्चित् कर्तव्याज्ञापनगाम्भीर्या कांश्चित् मनोनिगूढविषयाविष्करणपरिपाट्या तत्तदुचित- समाधानकरणधोरण्या च संहर्षयन्तोऽनुगृह्णन्तो दरीदृश्य- न्ते। त एते किल कदाचित् तत्तन्नगरीग्रामटिकावासिनोऽपि भक्तान् प्रसादयितुं विजययात्रामारचयन्तः अद्भुतानि मह- नीयानि बहूनि कर्माणि प्रकटयन्तः जगद्गुरुत्वं प्राचीकशन्। किमु वक्तव्यं तेषां महिमानं वक्तुं बृहस्पतिनापि नालमिति। किञ्च ते गुरुपरम्पराप्राप्तपीठपरिपालनाय निरतिशयशमादि- गुणसंपन्नान् आचार्यान् सिंहासनमध्यारोप्य तैरस्माकं जाग- तकार्यभरणं निवहन्तो मुद्रितमनसः प्रसीदन्ति। ततो मन्ये श्रीभगवत्पूज्यपादत्वं नाम्ना रूपेण च, श्रीसुरेश्वरत्वं व्याख्या- नसिंहासनाधिरोहणेन, श्रीविद्यारण्यत्वं विद्यानिधित्वेन, श्री- नरसिंहभारतीत्वं निरन्तरं निरतिशयभोगाकलनेन, अभिनव- नरसिंहभारतीत्वं शारदाचन्द्रमौलीश्वरसमाराधनसंवर्धितानु- ग्रहधिया चेति सर्वमेकत्र संभूय भासते इदमात्मनेति अहो भाग्यमहोभाग्यमस्माकम्। अतो वयं कृतार्था एव भवामः, यत् तेषामनुग्रहभाजनमुपास्महे च चरणारविन्दयुगलम्।

श्रीमान् जागतगुरुराट् सर्वोत्तंसो विभाव्यमानोऽसौ।  
श्रीचन्द्रशेखराख्यः शृङ्गगिरीन्द्रे विराजि सन्मूर्तिः॥  
मन्दं हसन् हि दृष्ट्या लोकाननुगृह्य नन्दयन् सततम्।  
श्रेयो दद्याद्भूयो नमामि भूयो नमामि तानेवम्॥

# १५

## ॥ वेदस्वरूपम् ॥

[ महामहोपाध्याय-कलाप्रपूर्ण-इत्यादिबिरुदालंकृतेन विजयनगर-वास्तव्येन तातोपनामकसुब्बरायशास्त्रिणा विरचितम् ]



विदितचरमेव तत्र भवतामिह खलु भारते वर्षे प्रायः सर्वे जनाः 'अस्ति पुनर्जन्म अभ्युदयनिःश्रेयससाधनो धर्मः। तदवगमश्च स्वतः प्रमाणभूताद्वेदात् तन्मूलभूतस्मृत्यादिभ्यश्च' इति दृढं विश्वसन्तीति अभ्युदयश्चाऽमुष्मिकमागामिजन्मपरम्परानुभूयमानं सुखं प्रवृत्तिलक्षणाद्धर्माद्भवति निःश्रेयसं चाऽत्यन्तिकं सुखं मोक्षापरनामकं निवृत्तिलक्षणाद्धर्मात्। उभयविधधर्मेऽपि वेद एव परमं प्रमाणमिति तत्स्वरूपनिर्णयप्रस्तावः किञ्चिदिव धर्माय कल्पत इति मनीषया "भवद्गिरामवसरप्रदानाय वचांसि नः" इति माघकव्युम्भितभगवदुक्तिमनुसृत्य विद्वत्प्रवराणां पुरतो निक्षिप्यते। एतदाकलय्य तन्निर्णये विद्वत्प्रवरा एव प्रमाणम्।

वेदस्तावदनादिभूतः, अपौरुषेयः, परमेश्वरादभिव्यक्तः। न तु तस्य कर्ताऽस्तीति केचन मन्यन्ते। तदुक्तं सूतसंहि-

तायां "श्रुतिः सनातनी साध्वी सर्वमानोत्तमोत्तमा" इति "श्रुतिः सनातनी शम्भोरभिव्यक्ता न संशयः" इति च। बृहदारण्यकेऽपि वेदस्य कस्यचिद्भूतस्य निःश्वसितमात्रत्वमेवोक्तम्। तेनाकर्तृकत्वं वेदस्य सिद्धमिति कर्तृदोषाणां श्रुतावप्रसक्तेरतीन्द्रियार्थबोधकत्वेन तस्मिन्प्रत्यक्षादीनामप्रवृत्त्या बाधज्ञानानुदयात् सर्वदा प्रामाण्यमिति मीमांसकादयः। नैयायिकादयस्तु वेदस्य कर्ता ईश्वरः; तस्य च सर्वज्ञत्वेन निर्दोषत्वेन च तत्र भ्रमदोषादेरप्रसक्त्या तदुक्तस्य वेदस्य सर्वथा प्रामाण्यं सिध्यतीति वदन्ति। उदाहरन्ति चास्मिन्नर्थे "तस्माद्यज्ञात्सर्वहुतः। ऋचः सामानि जज्ञिरे" इत्यादिश्रुतिजातम्। अयमपि पक्षः "शङ्करेण प्रणीत इति प्रवदन्त्यपरे जना" इति सूतसंहितायां मतान्तरत्वेन प्रदर्शितः। अनयोः पक्षयोराद्यपक्षस्यैव मुख्यत्वम्। तदुक्तम् "अतः पक्षद्वयेनापि वेदो मानं न संशयः। वेदोऽनादिश्शिवस्तस्य व्यञ्जकः परमार्थतः॥ अभिव्यक्तिमपेक्ष्यैव प्रणेतेत्युच्यते शिवः।" इति सूतसंहितायामुपसंहारवाक्येन प्रतीयते। तस्य वेदस्यानन्त्यम् "अनन्ता वै वेदाः" इति तैत्तरीयोद्धृतकाठकश्रुतितोऽवगम्यते। उक्तमानन्त्यं द्रढयितुं काचन गाथा तत्रैव श्रूयते। "भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तं ह जीर्णं स्थविरँ शयानम्। इन्द्र उपव्रज्योवाच—भरद्वाज! यत्ते चतुर्थमायुर्दद्याम्। किमेतेन कुर्या इति। ब्रह्मचर्यमेवैनेन चरेयमिति होवाच। तँ ह त्रीन्गिरिरूपानविज्ञातानिव दर्शयांचकार। तेषाँ हैकैकस्मान्मुष्टिनाददे।

स होवाच । भरद्वाजेत्यामन्त्र्य । अनन्ता वै वेदाः" इति । भरद्वाजो नाम ऋषिर्वर्षशतत्रयं वेदाध्ययनमुद्दिश्य गुरुकुलवासं कृतवान् । तेन तुष्टः इन्द्रः साक्षाद्भूय हे भरद्वाज! यदि तव वर्षशतमन्यदायुर्दद्यां किं तेन करिष्यसीति पप्रच्छ । तेनापि ब्रह्मचर्यं करिष्यामीत्यवोचत् । तत इन्द्रः वेदानामानन्त्यं बोधयितुं त्रीन्पर्वताकारान्वेदसङ्घान्प्रादर्शयत् । ततः स तेभ्यः प्रत्येकमेकैकं मुष्टिमादायोवाच । हे भरद्वाज! एते त्रयः पर्वता वेदा एव इति । अनया च गाथया वेदा अनन्तास्तत्रैकः पांसुरेको वेदः । तस्मादनन्ता वेदा इति तदाशयः । दीर्घकालब्रह्मचर्येणाप्यल्पमेव वेदैकदेशं जग्राह । अतस्साकल्येन वेदानां ज्ञानं सर्वज्ञेश्वरातिरिक्तस्य न कस्यापि सम्भवति । कासांचिच्छाखानां प्रच्छन्नत्वादिति प्रतीयते ।

तेषां वेदानां ऋग्यजुःसामाथर्वभेदेन विभिन्नरूपत्वेऽपि तेषां प्रथमं परस्परं श्लिष्टतयैवावस्थानमासीत् । कालक्रमेण मनुष्याणां वीर्यादीनां ह्रासेन शिष्टरूपात्तदर्थज्ञानस्यानुष्ठानोपयोगिनोऽसम्भवाद्वेदविभागस्तदा तदा चातुर्होत्रविवक्षया कृत इति तत्कर्तुर्व्यास इति उपाधिः । एवं सन्निहितद्वापरान्ते ब्रह्माज्ञया कृष्णद्वैपायनो नाम ऋषिर्वेदविभागं कृत्वा व्यास इत्युपाधिं लब्धवान् । एवमन्येऽपि ततः पूर्वे इति विष्णुपुराणादितोऽवगम्यते । तदुक्तम् विष्णुपुराणे— "द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने । वेदमेकं स बहुधा कुरुते जगतो हितः ॥ वीर्यं तेजो बलं चाल्पं मनुष्याणामवेक्ष्य वै

हितार्थं सर्वभूतानां वेदभेदान्करोति सः ॥ यया स कुरुते तन्वा वेदमेकं पृथक्प्रभुः। वेदव्यासाभिधानात्तु सा सा मूर्ति-र्मधुद्विषः॥" इत्यादिना। "ततोऽत्र मत्सुतो व्यासः अष्टाविं-शतितमेऽन्तरे। वेदमेकं चतुष्पादं चतुर्धा व्यभजत्प्रभुः॥" इत्य-नेनच स्वयम्भूप्रभृतीनां कृष्णद्वैपायनादीनामष्टाविंशतिऋषीणां तत्तद्द्वापरान्तेषु वेदविभागकरणेन वेदव्यास इत्युपाधिरासी-दिति स्पष्टम्। "भविष्यद्द्वापरे चापि द्रौणिर्व्यासो भवि-ष्यति। व्यतीते मम पुत्रेऽस्मिन् कृष्णद्वैपायने मुने।" इत्यनेनागामिन्यपि काले तत्तद्द्वापरान्ते ते ते ऋषयो वेद-विभागं कृत्वा वेदव्यास इत्युपाधिं लप्स्यन्त इति च गम्यते। अत्र सर्वत्रैकस्यैव वेदस्य विभागबोधनादाद्यस्य वेदस्यैकरूपत्वं श्लिष्टरूपत्वं चासीदिति निश्चेतुं शक्यते। तस्य च श्लिष्टरूपस्य वेदस्य यजुर्वेद इत्येव नामेति "एक आसीद्यजुर्वेदस्तं चतुर्धा व्यकल्पयत्" इति विष्णुपुराण-वचनेन "यच्छिष्टं तु यजुर्वेदे तेन यज्ञमयुञ्जत। यजनाद्धि यजुर्वेद इति शास्त्रस्य निश्चयः" इति वायुपुराणोक्तवचनेन चावगम्यते। यजुःसंज्ञकात्तस्मान्मूलवेदात् ऋचः यजूंषि सामानि च प्रत्येकमुद्धृत्य तत्तत्सङ्कलनया ऋग्वेदादीन् कृतवानिति। "ततः स ऋच उद्धृत्य ऋग्वेदं कृतवान्मुनिः। यजूंषि च यजुर्वेदं सामवेदं च सामभिः" इति विष्णु-पुराणवचनात्प्रतीयते। एतेनेदं सङ्कलनं व्यासकृतमेव। न त्वपौरुषेयमिति लभ्यते। उद्धरणकरणयोः स्मरणात्।

तेषां वेदानां प्रत्येकं बह्व्यश्शाखा आसन्। ताश्च चरण-

व्यूहादिग्रन्थेभ्योऽवगम्यन्ते । तदप्युक्तं तत्रैव "इति शाखाः प्रसंख्याताः शाखाभेदास्तथैव च" इति । ताश्च विभिन्नाः शाखा व्यासानन्तरभाविभिस्तत्तदृषिभिः कृता इति तद्विभागकथने कृञ्धातुप्रयोगेण स्फुटीकृतम् । एतत्सर्वं तृतीयांशे द्वितीयादिषष्ठान्तेष्वध्यायेषु विस्तरेण प्रतिपादितत्वात्तत एवावगन्तव्यम् । तास्वपि शाखासु कासाञ्चिदिदानीमुपलम्भादन्याः शाखाः विच्छिन्ना इति "ह्रासदर्शनतो ह्रासः संप्रदायेऽनुमीयताम्" इत्युदयनोक्त्यावगम्यते ।

एवं तत्तद्भिन्नशाखासु प्रत्येकं परिदृश्यमानानां मन्त्राणामाद्यवेदे एकरूपतयैव स्थितिः । ते ते ऋषय एकस्यैव मन्त्रस्य विनियोगभेदं पश्यन्तस्तत्तत्प्रकरणेषु तमेव मन्त्रमावृत्यापठन्निति । "अन्या संस्कारगायत्री कर्मण्यन्या प्रयुज्यते । अन्या जपप्रबन्धे सा त्वेकैव प्रतीयते" इति वचनेनेदानीमेकस्यैव मन्त्रस्य भिन्नभिन्नस्थलेष्वेकस्यामेव शाखायां भिन्नभिन्नस्थलेषु दर्शनेन च भिन्नविनियोगानुरोधेन भिन्नदेशेषु पृथक्पाठस्य दर्शनेन चोक्तार्थो दृढीक्रियते ।

बृहदारण्यकभाष्ये श्रीमच्छङ्करभगवत्पादै रचनानैयत्यमुक्तम् । "तेन प्रोक्तम्" इति सूत्रे भाष्ये पतञ्जलिना "या त्वसौ वर्णानुपूर्वी साऽनित्या" इत्यनेन रचनाया अनैयत्यमुक्तम् ।

एवं स्थिते वेदोऽपौरुषेयोऽनादिरिति व्यवहारः किमाद्यवेदस्योत इदानीमुपलभ्यमानस्यापि वा । श्रीमद्भगवत्पादोक्तदिशा रचनानैयत्याङ्गीकारे आनुपूर्व्या अनित्यत्वं ब्रुवन्

पतञ्जलिः किमप्रमाणभूत उत प्रमाणभूतः । तस्य प्रमाणभूतत्वे भगवत्पादोक्तेः कथं वा संगतिरित्यादिका विप्रतिपत्तयो जायन्ते । अतो विप्रतिपत्तिनिरासाय यतितव्यं पण्डितप्रवरैरिति धिया अत्र काचन सरणिः प्रस्तूयते । अत्र युक्तमुत्पश्यन्तु सुधियः ।

वेदोऽनादिरपौरुषेयो नित्यो नियतानुपूर्वीकोऽनन्त एक एव संश्लिष्टरूपः । तादृशस्वरूपमधिकृत्यैव विष्णुपुराणे आद्यो वेद इति व्यवहारः । "वेदमेकं स बहुधा" इत्यादिना वेदस्यैकत्वव्यवहारः । "स त्वेकैव प्रतीयते" इत्यन्यत्र व्यवहारः । "श्रुतिः सनातनी शम्भोरभिव्यक्ता न संशयः" इति सूतसंहिताव्यवहारः । ऋग्यजुःसामाथर्वभेदेन विभागश्च मूलवेददृष्टमन्त्राणां ब्राह्मणवाक्यानां च तत्तदानुपूर्वीमनुल्लङ्घ्यैव तत्तदृत्विगुपयोगितया प्रत्येकं संकलनया व्यासेन कृत इति प्रागुक्तविष्णुपुराणान्निश्चेतुं शक्यते । एवं तत्तदृषिनाम्ना भिन्नानां तत्तच्छाखानां संकलनं तु प्रागुक्तदिशा मूलवेदोक्तमन्त्रब्राह्मणवाक्यानुपूर्वीमनुल्लङ्घ्यैव तत्तदृषिभिः कृत इति निश्चेतुं शक्यते । अत एव विष्णुपुराणे "इति शाखाः प्रसंख्याताः शाखाभेदास्तथैव च । कर्तारश्चैव शाखानां भेदहेतुस्तथोदितः" इत्यनेन वेदस्याभिन्नत्वेऽपि कर्तृभेदेन तन्मूलकशाखाभेदेन वेदस्य भेद इत्युक्तम् । ध्वनितं चेदं "तेन प्रोक्तम्" इति सूत्रे भाष्ये पतञ्जलिनापि । एवं च मूलवेदस्य संश्लिष्टरूपस्याकर्तृकत्वमनादित्वं नियतानुपूर्वीकत्वं च । तत्तच्छाखासु मूलवेददृष्टमन्त्रब्राह्मणपाठक्रमवै-

परीत्येऽपि प्रत्येकं तत्तदानुपूर्व्यनुल्लङ्घनेन तत उद्धृत्य प्रत्येकं संकलनं व्यासेन कृतमिति तत्पाठक्रमस्य व्यासकर्तृत्वेऽपि तद्घटकमन्त्राणां ब्राह्मणवाक्यानाञ्चास्मदादिकृतग्रन्थेष्वन्य-दीयस्मृतिवाक्यानामुद्धरणेष्यस्मत्कर्तृत्वाभाववद्व्यासकर्तृकत्वा-भावेनाकर्तृकत्वं च सिध्यति । रचनानैयत्योक्तिस्तु भगवत्पा-दानां मूलवेदाभिप्रायेणेदानींतनशाखाघटकमन्त्रब्राह्मणवा-क्याभिप्रायेण वा संगमनीया । आनुपूर्व्या अनित्यत्वो-क्तिश्च पतञ्जलेरिदानीं परिदृश्यमानतत्तच्छाखास्थमन्त्राणां पाठक्रमवैपरीत्यस्योपलब्धतयैतादृशक्रमाभिप्रायिका, न तु मूलवेदाभिप्रायिका, नापि तत्तन्मन्त्रानुपूर्व्यभिप्रायिका वा । अत एव "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" इति स्मृ-त्युक्तं वेदानामन्यान्यत्वमुपपद्यते । एवं चोभयोरपि प्रमाण-भूतत्वमव्याहतम् ।

किं चाधुना सम्प्रदाये उपलभ्यमानकृष्णयजुर्वेदपाठ-क्रमपर्यालोचनेऽयं पाठक्रमो न मूलवेदस्थः, किं तु येन केनचिद्दृषिणा संयोजित इति स्फुटमवगम्यते । तथा हि— मन्त्रब्राह्मणयोर्वेदनामधेयमित्यत्र न कस्यापि विप्रतिपत्तिः । अतो वेदस्थवाक्यानां मन्त्रत्वेन ब्राह्मणत्वेन वावश्यं भा-व्यम् । तदुभयानात्मकस्य भागस्य वेदे घटनं सर्वथा न युज्यते । इदानीं सम्प्रदाय उपलभ्यमाने यजुर्वेदे तदुभया-नात्मका अपि कतिचन भागा दृश्यन्ते । दिङ्मात्रमुदाह्रि-यन्ते । कृष्णयजुर्वेदद्वितीयकाण्डे पञ्चमप्रपाठके द्वादशानु-वाके एवं पाठ उपलभ्यते— "आयुष्ट आयुर्दा अग्न आप्या-

यस्य सन्तेऽव ते हेड उदुत्तमं प्रणो देव्यानो दिवोभाविष्णो अग्नाविष्णू । इमं मे वरुण तत्वायाम्युदुत्यं चित्रम्" इति । अयं भागो न मन्त्रात्मको न वा ब्राह्मणात्मकः । परं त्वन्यत्र भिन्नभिन्नस्थलेषु पठितानां चतुर्दशानां मन्त्राणां प्रतीकसंघाततया दृश्यते । मन्त्रप्रतीकानि तावत् प्रत्येकं मिलित्वा वा मन्त्रतामधिगन्तुं नेशते । अत एतानि तत्तत्स्थानस्थिततत्तन्मन्त्रस्फोरकतयाऽध्येतृसौकर्यार्थं प्रदर्शितानीत्यूहितुमवकाशो वर्तते । मन्त्रपठनफलं तु तत्तत्प्रतीकोपस्थिततत्तन्मन्त्राणां साकल्येन पठन एवेति प्रतिभाति । उदाहृतप्रतीकादिघटितभागपठने मन्त्रब्राह्मणपाठफलाभावेऽपि ऋषिप्रोक्तपठनफलमस्त्येव । एवं प्रतीकानां प्रदर्शनमस्मिन् वेदे संहिताभागे ब्राह्मणभागे च प्रायश उपलभ्यते । क्वचिन्मन्त्राणां साकल्येन पाठमकृत्वा एकदेशपाठेनैव पूर्णमन्त्रज्ञानसंपादनाय प्रयतितमित्यपि गम्यते ।

अत्रोदाहरणम् तृतीयकाण्डे चतुर्थप्रपाठके पञ्चमानुवाकस्त्वेवं दृश्यते ।

१ अग्निर्भूतानाम् अधिपतिः समावतु ।
२ इन्द्रो ज्येष्ठानाम् ।
३ यमः पृथिव्याः ।
४ वायुरन्तरिक्षस्य ।
५ सूर्यो दिवः ।
६ चन्द्रमा नक्षत्राणाम् ।
७ बृहस्पतिर्ब्रह्मणः ।
८ मित्रः सत्यानाम् ।
९ वरुणोऽपाम् ।
१० समुद्रः स्रोत्यानाम् ।
११ अन्नँ साम्राज्यानामधिपति तन्मावतु ।
१२ सोम ओषधीनाम् ।

१३ सविता प्रसवानाम् । १४ रुद्रः पशूनाम् । १५ त्वष्टा रूपाणाम् । १६ विष्णुः पर्वतानाम् । १७ मरुतो गणानामधिपत- यस्ते मावन्तु । १८ पितरः पितामहाः परे वरे ततास्ततामहा इह मावत । अस्मिन् ब्रह्मन्नस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मि-न्कर्मण्यस्यां देवहूत्याम् ।

अस्मिन्ननुवाकेऽभ्यातानननामकानामष्टादशमन्त्राणां स्वरूपं ज्ञाप्यते । अत्र चरमस्य मन्त्रस्य साकल्येन पाठोऽस्ति । इतरेषां तु तथा न । तेषां किञ्चिद्भागपूरणेन मन्त्रत्वसंपत्तिः कर्तव्या । सा चेत्थम् आद्यमन्त्रे दृष्टस्य अधिपतिः समाव-त्वित्यस्यांशस्य एकादशमपहाय षोडशपर्यन्तेष्वनुषङ्गः कार्यः । एवं समीकृतेषु सप्तदशमन्त्रभागेषु चरममन्त्रसमाम्नातः "अस्मिन् ब्रह्मन्" इत्यादिको भागोऽन्ते योजनीयः । एवं सति "अग्निर्भूतानामधिपतिः समावत्वस्मिन्ब्रह्मन्नस्मिन्... देवहूत्याम्" "इन्द्रो ज्येष्ठानामधिपतिः समावत्वस्मिन् ब्रह्मन् ... देवहूत्याम्" इत्येवं देवहूत्यामितिपदान्ता मन्त्राः सम्पद्यन्ते । एत एव मन्त्राः । प्रकृतानुवाके दृश्य-मानास्तु मन्त्रैकदेशा न तु मन्त्रा इत्यवगम्यते । मन्त्रपा-ठस्तु एतज्ज्ञापित एवेत्यधोलिखितसायणग्रन्थसंदर्भेणाव-गम्यते । स चेत्थम् । "अधिपतिः समावत्वित्येतत्पदचतु-ष्टयं वक्ष्यमाणेषु षष्ठ्यन्तेषु वाक्यशेषत्वेनानुवर्तते । अनुव-र्तमानस्य लिङ्गव्यत्ययं द्योतयितुमधिपति तन्मावत्वित्याम्ना-तम् । ...... अत्रानुषज्यमानस्य वचनव्यत्ययं द्योतयितु-

मधिपतयस्ते मावन्त्वित्याम्नातम् । चरममन्त्रे समाम्नातम् । अस्मिन्ब्रह्मन्नित्यादिकं सर्वेषु सप्तदशमन्त्रेष्वनुषञ्जनीयम् । तथा सति अग्निर्भूतानामधिपतिः समावत्वस्मिन्ब्रह्मन्, इन्द्रो ज्येष्ठानामधिपतिः समावत्वस्मिन्ब्रह्मन् इत्येवं पाठः सम्पद्यते इति । एतेनाधुना परिदृश्यमानः पाठः न मन्त्रपाठः, किं तु मन्त्राणां स्फुरणायोपायभूतः पाठविशेष इति प्रतिभाति ।

एवं कृष्णयजुर्वेदीयतृतीयकाण्डचतुर्थप्रपाठकसप्तमानुवाके राष्ट्रभृन्नामका मन्त्रा एवमाम्नायन्ते । "ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा । ताभ्यः स्वाहा । संहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवः सुषुम्नः । ......... चारुः कृपणकाशी कामो गन्धर्वस्तस्याधयोऽप्सरसः शोचयन्तीर्नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा । ताभ्यः स्वाहा" इति । अस्मिन्ननुवाके राष्ट्रभृन्नामका द्वाविंशतिमन्त्राः सूच्यन्ते । मन्त्रस्वरूपं तु साकल्येन न पठ्यते । तत्र प्रथमपर्याये श्रुतस्य नाम स इदमित्यादेरुत्तरपर्यायेषु योजनया साकल्यसम्पत्तिः कार्या । अनुवृत्तिरिति तु न युक्तम् । मध्ये "भुवनस्य पते यस्य" इत्यादिना विच्छेदात् । मण्डूकानुवृत्तिरित्यपि न शोभनम्, अन्ते पुनःपठनवैयर्थ्यात् । अत आद्यन्तयोः

पठितस्य तस्य तस्य भागस्य यथायोगं तत्र तत्र संबन्धं कृत्वा संकलनेन तत्तन्मन्त्रस्वरूपं ज्ञेयमित्याशयोऽवगम्यते ।

अत्र केचन "ऋताषाडृतधामाग्निर्गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा" इत्येको मन्त्रः "तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा" इत्येको मन्त्रः । एवं पर्यायान्तरेष्वपि योज्यमित्याहुः । अपरे पुनस्तस्मै स्वाहेत्यन्त एको मन्त्रः, ताभ्यः स्वाहेत्येतावन्मात्रमेवापरो मन्त्र इति वदन्ति । उभयथापि संप्रदायो दृश्यते । अत्र युक्तमुत्पश्यन्तु सुधियः । पक्षद्वयेऽपि द्वितीयादिपर्यायेषु "नाम स इदं ब्रह्म" इत्यादेः पूरणमन्तरा मन्त्रत्वसम्पत्तिर्नास्तीति स्पष्टम् । एवं चायमनुवाकस्तत्तन्मन्त्रस्फोरकः; न तु साकल्येन मन्त्रपाठ इति निश्चेतुं शक्यते ।

किञ्चैकस्यैव मन्त्रस्य तत्तत्कर्मसु विनियोगभेदेन पौनःपुन्येन पाठोऽधुनातनपाठक्रमे दृश्यते । यथा प्रथमकाण्डे प्रथमप्रपाठके चतुर्दशानुवाके पुरोनुवाक्यात्वेन पठितस्य "उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै" इत्यादिमन्त्रस्य प्रथमकाण्डे पञ्चमप्रश्ने पञ्चमानुवाके अग्न्युपस्थाने विनियोगार्थं पुनः पाठो दृश्यते । स्थलद्वये पठितौ भिन्नावेव मन्त्राविति तु न वाच्यम्, एकमन्त्रत्वस्य सायणेनोक्तेः । एवं प्रथमकाण्डतृतीयप्रश्ने चतुर्दशानुवाके याज्यापुरोनुवाक्यात्वेन पठितानाम् "अग्न आयूँषि पवसे" इत्यादीनां षण्णां मन्त्राणां प्रथम-

काण्डे पञ्चमप्रपाठके अग्न्युपस्थाने विनियोगार्थं पुनः पाठो दृश्यते। एतेषां मन्त्राणामैक्यं सायणभाष्यतोऽव-गम्यते।

किञ्चैकाग्निकाण्डपाठक्रमपर्यालोचने तु महती विप्रति-पत्तिरुदेति। तत्रापस्तम्बगृह्यसूत्रोक्तविनियोगानुरोधी पाठ-क्रमो दृश्यते। अत एव तत्तन्मन्त्रस्फोरणाय मन्त्रप्रतीक-मनुक्त्वैव उत्तरया उत्तराभ्यामित्येवंरूपेण मन्त्रान् ग्राह-यत्यापस्तम्बः। बोधायनादयस्तु तत्पाठक्रममननुसृत्यैव तत्त-न्मन्त्रसूचितं किञ्चिदर्थमाकलय्य तत्तन्मन्त्रान् तत्तत्कर्मसु विनियोजयामासुः। सर्वेऽपि ते एकशाखावलम्बिगृह्यकर्म-विनियोगबोधका एव। अस्य मन्त्रपाठस्यानादित्वे एकशा-खावलम्बिनामीदृशो विभेदः कथं संगच्छते। ईदृशभेददर्श-नेन तु अयं मन्त्रपाठक्रम आपस्तम्बमतावलम्बिभिराश्रित इत्यनुमातुं शक्यते। अयमत्र संग्रहः। पूर्वप्रदर्शितग्रन्थ-पर्यालोचनेनायमंशः सिध्यति—

१ प्रथममेकोऽनादिरपौरुषेयो यजुर्नामको वेद आसीत्।

२ तत्रत्यऋगादीनुद्धृत्य संकलय्य ऋग्वेदादिना वि-भागः कृतो व्यासेन।

३ पश्चात्ते ते ऋषयः स्वस्वदृष्टविनियोगानुसारेण ता-स्ताः शाखाः संकलयामासुः।

४ अतो मूलवेदोद्धृतशाखापाठक्रमश्च तत्तदृषिकल्पित एव, न त्वनादिः।

५ इदानीमुपलभ्यमानतैत्तिरीयवेद इतरशाखातः कंचन भागमाहृत्य केनचिदृषिणा संकलितः । अत एव कस्यचिद्भागस्य परायातत्वप्रसिद्धिरप्युपपद्यते ।

६ एकाग्निकाण्डश्च आपस्तम्बमतावलम्बिना केनचित् संयोजितः । अत एव तस्य यजुर्वेदान्तर्भूतत्वबहिर्भूतत्वविप्रतिपत्तिरपि पण्डितप्रवराणामुपपद्यते ।

७ वेदस्थपदानामेवानादित्वं न तु मन्त्राणामिति नव्यवैयाकरणाः, उपलभ्यमानस्य सर्वस्यापि क्रमस्यापौरुषेयत्वं वदन्तो नव्यमीमांसकाः, सर्वस्याप्याधुनिकत्वं वदन्तः पाश्चात्यास्तदनुयायिनो युक्तिमात्रानुरोधिनश्चोपेक्ष्याः ।

इदानींतनशाखापाठे मन्त्रब्राह्मणपाठफलमस्त्येव । तत्क्रमयुक्तपाठेऽप्यार्षक्रमपाठफलमस्त्येव । क्रमव्यत्यासेन मन्त्रब्राह्मणवाक्यपाठे तु प्रत्येकं मन्त्रब्राह्मणपाठफलस्य सत्वेऽप्यार्षक्रमपाठफलं न घटते । अतस्तत्क्रमोऽपि पारायणादावादरणीयः । अत एवेदानीं शिष्टा अध्यापनकाले दृष्टक्रममनादृत्य यथासंभवमध्यापयन्तीति विभावनीयम् ।

एतत्सर्वमाकलय्य सम्यग्विचार्य निर्णये प्रामाणिका विद्वत्प्रवरा एव प्रमाणमिति शिवम् ।

इति श्रीकृष्णयजुश्शाखाध्यायिना आपस्तम्बसूत्रेण आत्रेयसगोत्रेण तातोपनामकसुब्रह्मण्यशास्त्रिणा श्रीमत्परमहं-

इत्यादिश्रीमच्छंकरभगवत्पादप्रतिष्ठापितश्रीशृङ्गगिरिमठाधी-
श्वराणां श्रीचन्द्रशेखरभारतीस्वामिगुरुवर्याणां श्रीचरणसं-
निधौ भक्तिपूर्वकमुपायनतया समर्पितोऽयमुपन्यासः ।



# १६

## ॥ आचार्यस्तवः ॥

[ अभिनवभट्टबाण — पण्डितराज — महामहोपाध्याय — इत्या-
दिबिरुदभाजा रायम्पेट्टै कृष्णमाचार्येण विरचितः ]



श्रुत्युक्तौ नष्टशक्तौ बत जडमतिभिः शास्त्रसार्थे हतार्थे
शिष्टाचारेऽस्तसारे प्रतिदिशमनिशं साधुलोके सशोके ।
ध्वस्ते धर्मे प्रशस्ते कलिपुरुषमृषापौरुषे जातपोषे
शंभुः श्रीशंकरात्मा समजनि जगतस्त्राणहेतोर्धरण्याम् ॥१॥

आदावाधाय तांस्तान्निरुपमनिजवाग्वैखरीभिः समन्ता-
च्छिष्यान्नास्तिक्यदूरानविरतमपि तत्संप्रदायप्रवृत्त्यै ।
कृत्वा भाष्याणि तेषां प्रवचननियतिं कल्पयित्वा मठेषु
व्याख्यासिंहासनं द्रागलमकृत यतिः शारदापीठ एषः ॥२॥

यस्मिन्नद्वैतविद्याविवरणसरणिप्रौढिमाटीकमाने
वेदैः खेदः समोदैः सह सकलपुराणेतिहासैर्निरासे ।
चार्वाकैः शोकमूकैरजनि गतमदैस्तत्रसे बौद्धभेदै-
र्जैनैर्दीनैर्बभूवे निजमतविमुखैः कापिलैः क्वापि लिल्ये ॥

जगद्गुरोरादिमशंकरार्यादद्याप्यविच्छिन्नतया गुरूणाम् ।
परंपरा यत्र चकास्ति सोऽयमास्ते मठः शृङ्गगिरौ पुराणः ॥४॥

श्रीवेदभाष्यकर्ता विद्यारण्यो मुनिर्यमधितष्ठौ ।
अनुपममहिमा सोऽयं शृङ्गगिरौ भाति शारदापीठः ॥ ५ ॥

ज्ञानवैराग्यभक्तीनां धामभिः पुण्यनामभिः ।
अन्यैश्च यतिमूर्धन्यैरेष पीठो विभूषितः ॥ ६ ॥

एवं क्रमेण गुरुभिः परिशोभितस्य
पीठस्य लोकसुकृतेन कृतावतारः ।
श्रीमच्छिवाभिनवपूर्वनृसिंहभार-
त्याख्यो मुनीन्दुरवहन्महदाधिपत्यम् ॥ ७ ॥

आस्तां नाम जगद्गुरोर्यतिपतेरस्यानवद्या परा
विद्या सापि तपस्विता ननु परानेषोऽतिशेते यया ।
मन्दस्मेरमुखारविन्दविगलन्माध्वीझरी भारती
सिक्ता शान्तिरसेन नः स्मृतिगता चित्ते विधत्ते मुदम् ॥८॥

क्वचिद्वाग्मित्वं स्यात्क्वचन विषयज्ञत्वमुभयं
न खल्वेतत्प्रायः परिकलितमेकत्र मिलितम् ।
इदः नः सौभाग्यं यदुभयमदर्शाम तदिदं
यतीन्द्रे शृङ्गाद्रिस्थिरचिरमहीयोमठपतौ ॥ ९ ॥

आमूलादभिदध्महे कथमिव श्रीमद्गुरूणां महो-
पन्यासे विषयावमर्शसरणिं विश्वप्रियंभावुकाम् ।
नूनं नूतनवादिहैतुकमनस्तोषोदयं तन्वती
निर्दोषा च गुणाधिका च सपरिष्कारा च सा राजते ॥१०॥

तर्कातर्किपटीयसीभिरभिदासिद्धान्तसौवादवा-
स्वादैकप्रवणप्रवीणपरिषत्प्राप्तप्रशंसोक्तिभिः ।
श्रीमच्छृङ्गगिरिस्थपीठमठयोरीशस्य षड्दर्शनी-
साराद्गुणतीभिरस्य यमिनो वाचाभिरोजायितम् ॥ ११ ॥

ब्रह्मैकतारसमये समये यमीन्द्र-
स्तुर्याश्रमानुगुणसद्गुणजातपूर्णम् ।
श्रीचन्द्रशेखरपदोत्तरभारतीन्द्र-
मन्वग्रहीन्महितपीठमठाधिनाथम् ॥ १२ ॥

आचार्यवर्यमहनीयनिदेशवर्ती
दीपः प्रवर्तित इव प्रगुणः प्रदीपात् ।
स्नेहोज्ज्वलः प्रकटिताखिलवस्तुतत्त्वः
क्षेमंकरो विजयते यतिसार्वभौमः ॥ १३ ॥

अभेदैकत्वं नः कलयति समस्तेषु सुधियां
विशिष्टैकार्थ्याय प्रकटयति शक्तिं प्रतिनवाम् ।
व्यपेक्षाभावेन प्रसरति च पञ्चाननमतो
जहत्स्वार्था वृत्तिर्जयति यतिवर्यस्य जगति ॥ १४ ॥

सारसहृदयामोदं विदधानोऽन्तस्तमो विभिन्दानः ।
सत्पथविकासहेतुर्महोदयो जयतु हन्त यतिराजः ॥ १५ ॥

सारासारविचारचारुमनसा सौजन्यधन्यात्मना
कारुण्यामृतवर्षिहर्षिवचसा विद्यासमुद्द्योतिना ।
लोकानुग्रहतत्परोग्रतपसा शिष्याः सनाथाः सदा
जीयासुः सहचन्द्रशेखरपदश्रीभारतीयोगिना ॥ १६ ॥

श्रीमन्मठाधिपतिभावभरादरस्य
यत्सप्तविंशतिरगात्परिवत्सराणाम् ।
स्थाने तदेष सकुतूहलमाप्तशिष्य-
वर्गो महोत्सवमुपक्रमतेऽत्र कर्तुम् ॥ १७ ॥

आचार्यमादृतमुपास्स्व यथैव देव-
मित्येवमादिशति वागनपायिनी नः ।

इत्थं श्रुतेरभिमतं यदि वेद कोऽपि
सोऽयं महोत्सवमिमं न कथं करोतु ॥ १८ ॥

महोत्सवेऽस्मिन्महितैरनेकैरनन्यसाधारणभक्तिपूतैः ।
समर्पितं सद्रसवाङ्मयार्हपुष्पाञ्जलिं स्वीकुरुतां यतीन्द्रः ॥१९॥

स्वाधीनकुशलसिद्धेरस्य कृते नास्ति किमपि संप्रार्थ्यम् ।
शिष्यानुशिष्टिहेतोः शरदः शतमेष जीवताद्योगी ॥ २० ॥

महामहोपाध्यायेन वात्स्यश्रीकृष्णसूरिणा ।
पुष्पं पण्डितराजेन नव्यबाणेन नीयते ॥



## १७

# ॥ श्रीशृंगेरिपीठमाहात्म्यम् ॥

[ गुरुभक्तशिखामणि—शास्त्रप्रसारभूषणः—बि. ए. इत्यादि-
बिरुदालंकृतेन टि. के. बालसुब्रह्मण्यार्येण विलिखितम् ]

श्रीशृङ्गगिरिरिति पुण्यतमं नाम बहुशो देशभाषया व्यवह्रियमाणं शृङ्गेरिरूपेण परिणतम् । क्षेत्रस्यास्य महिमा नास्माकं विशेषतो वर्णनमपेक्षते, यत्तस्य नामैव निरतिशयं तन्महिमानमुद्घोषयति । तुर्याश्रमिणामत्यन्तापेक्षितेषु गुणेषु प्रधानतम इन्द्रियजयः । वश्येन्द्रियेषु ऋष्यशृङ्ग एव प्रथमगणनीय इत्यत्र न कोऽपि विवादः । तस्मिन् क्षेत्रे वासात् ऋष्यशृङ्गस्य वश्येन्द्रियत्वमुदभूत्, अथवा तस्य महर्षेर्वा स्यात् तस्य क्षेत्रस्य इन्द्रियजयजनकत्वरूपो महिमा संजात इति विचारे न वृथा कालं क्षिपामः । सर्वथा क्षेत्रस्यास्य महिमा विश्वजनीनः । अस्मिन्नेव क्षेत्रे श्रीमद्भिर्भगवत्पादैरादिशंकराचार्यैरद्वैतविद्याप्रचारार्थं श्रीशारदापीठं प्रतिष्ठापितम्, श्रीमदाचार्यानुगृहीतैः श्रीमद्भिः सुरेश्वराचार्यैश्च तत्पीठमधिष्ठितम् । ये त्वत्र सुरेश्वराचार्यकृतशारदापीठवासेन मण्डनसुरेश्वरयोरभेदं संप्रतिपन्नमप्यन्यथयितुं यतन्ते— तथाहि, यदि मण्डन एव सुरेश्वरोऽभूदित्यभ्युपगम्येत तदा भारत्याः मण्डनपत्नीत्वेन प्रसिद्धायाः सुरेश्वरकृतं पूजादिकं न संगच्छेत, न हि पतिः पत्नीं स्वयं पूजयतीति युज्यत इति; त

इत्थं प्रष्टव्याः— यद्येवं कथं भगवत उमापतेरवतार इति सर्वैरप्यभ्युपगताः श्रीशंकराचार्याः स्वप्रियाया देव्याः पार्वत्याः स्तुतिरूपां सौन्दर्यलहरीमारचयन्निति । यद्यद्वैततत्त्वावबोधोत्तीर्णसर्वविकल्पानां महात्मनां नेदमनुपपन्नमिति विभाव्यते, अत्रापि तदेव समाधानं भवितुमर्हति ।

अत्रैव शृङ्गगिरौ श्रीसुरेश्वराचार्यादनन्तरं बोधघनाचार्यः, तदनन्तरं ज्ञानघनाचार्यः, तदनन्तरं ज्ञानोत्तमः, यो नैष्कर्म्यसिद्ध्यादेर्व्याख्यामकरोत्, ततः सिंहगिरिः, तदनन्तरम् ईश्वरतीर्थः, तदनन्तरं नरसिंहतीर्थ इत्यादयोऽद्वैतविद्यापीठमलमकार्षुरिति शृङ्गेरिमठस्थगुरुपरंपराग्रन्थादवगम्यते । अनन्तरमेव सुप्रसिद्धः श्रीविद्यातीर्थः पीठमलंचकार । तस्यैव विजयनगरभूपालधर्मोपदेष्टा सुप्रसिद्धो विजयनगरराष्ट्रपरिपोषको विद्यारण्यः शिष्योऽभूत्, अभूषयच्च शृङ्गेरिविद्यापीठम् ।

अनन्तरमाचार्यपरंपरासु त्रयस्त्रिंशाः श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनः प्रादुरभवन् । एते चाचार्या आदिशंकरभगवत्पादानामवतारभूता इति सार्वत्रिकी प्रथा। त एते ज्ञानानुष्ठानशेवधयो भूत्वा क्रि. प. १९१२ तमे संवत्सरे ब्रह्मभूयमापन्नाः । अनन्तरमद्यत्वे विराजमानाः श्रीचन्द्रशेखरभारतीस्वामिनः तस्मिन्नेव वत्सरे तदिदं विद्यापीठमध्यासत । एतेऽपि ज्ञानानुष्ठाननिधयः स्वाचार्यचरणाम्बुजविगलन्मरन्दरसास्वादलम्पटाः भ्रमरकीटन्यायेन स्वयमपि तादृक्स्वभावमापन्ना विगलितबाह्यविषयावगतयो ब्रह्मध्यानैकपरा भूत्वा नक्षत्रसंख्याकान् वत्सरान् विद्यापीठमलंकुर्वन्तो विजयन्त इति अभिनन्दामोऽस्माकं तत्सेवासंपादकं भाग्यम् ॥





शृङ्गगिरिमठस्थ श्रीशंकरभगवत्पादानां विग्रहः ।

## १८*

# श्रीचन्द्रशेखरभारतीदर्शन-मावश्यकम् ॥

[बि. ए., बि. एल्., अड्वोकेट् इत्यादिबिरुदभाजा मद्रराजधानी-प्रधाननीत्यास्थानाध्यक्षचरेण वि. वि. श्रीनिवासय्यङ्गार्येण विलिखितम्]

श्रृङ्गगिरावद्वैतविद्यापीठमधितिष्ठतः श्रीचन्द्रशेखरभारती-गुरूनधिकृत्य किमपि प्रतुष्टूषतो मे मनसि पर:शता अदसीया गुणा अहमहमिकया संनिदधते। त एव च तेषामग्रण्यो ये स्वामिनामात्मवत्त्वव्यपदेशे निमित्तभावमापद्यन्ते। श्रीस्वामिनां विज्ञानपारम्यमनुष्ठानगरिष्ठतां वैराग्यभूमानं च बहुशोऽपरोक्षयन्नहं स्वामिवर्यमेनं गभीरार्थपुष्कलेन निरुपमेन 'आत्मवान्' इति पदेन व्यपदेष्टुं निरणैषम्। भगवत्या गैर्वाण्या वाण्या अयमप्यपरो विशेषो यदियमन्यभाषादुर्लभमेतादृशं पदजातमुद्वहति। समाहितेन चेतसा चिरं गवेषयन्तोऽपि भाषान्तरेषु नैवोपलभामहे तादृशं पदं यत् 'आत्मवान्' इति पदमिवार्थगाम्भीर्येण श्रृण्वतां मनसि कमप्यतिशयमादध्यात्। भाषातत्त्वविदश्चैवमातिष्ठन्ते यद्वाचकपदाभावे वाच्यभूतं वस्त्वपि तत्र नास्तीति। अतो मन्यामहे

नैतादृशो योगिवर्यो देशान्तरेषु सुलभ इति। महतो महतः पृथ्वीमण्डलस्याभ्यन्तरे यत्र कुत्रचित् यः कश्चन स्पृहणीयः प्रदेशो महनीयः पुरुषधौरेयो वा निखिलहेयप्रत्यनीकः शान्त्यादिपरिकर्मितश्च स्यादिति संभाव्येत, सोऽयं शृङ्गगिरिः श्रीस्वामिवर्यश्चेति निःशङ्कमभिदध्महे। यद्यप्यहं तेषां स्वामिनां नाध्यात्मसंप्रदायक्रमागतेषु छात्रेष्वन्यतमः, तथापि तेषां वैराग्यादिगुणसंपत् शान्त्याद्यात्मगुणपरिपूर्तिश्चेत्येतादृशः कोऽप्यान्तरो हेतुर्मां तेषां संनिधिमुपनीय तेषु मम भक्तिपरीवाहमुद्वेलयति। तैर्निरन्तरभावितं ब्रह्माद्वैततत्त्वं तान् सदानन्दभरितान् बाह्यविषयवितृष्णान् निर्द्वन्द्वांश्च तन्तनीतीति युक्तं तेषामात्मानुभवपरिपन्थिषु वदावदकथाप्रसङ्गेषु शुष्कतर्ककर्कशेषु वितण्डादिषु च तूष्णीकतेति।

एतदेव पुनः पुनरभ्यर्थ्यते प्रियभावुकसमाजेषु यदि ये केचिदितः पूर्वं शृङ्गगिरिं नागमन् न वा तत्र स्वामिवर्याणां कृपामेदुरकटाक्षपातस्य पात्रभूयमनापन्नाः, ते सद्य एव प्रतिष्ठन्तां शृङ्गगिरिं दिदृक्षन्तां स्वामिवर्यानिति।

## ॥ शृङ्गगिरिपञ्चकम् ॥

दिष्ट्या त्वामिह पश्यामि ऋष्यशृङ्गाचलाधिप।
यः स्वप्ने बहुशो दृष्टः सदा चिन्तापथाहितः॥ १॥

सपर्वतवनोद्देशे स्वप्नवद् दृष्टनश्वरे।
भवानेकः सारभूतो वितते जगतीतले॥ २॥

वर्तन्ते खलु रम्याणां वस्तूनां नाशकाः खलाः।
गोपायसि त्वं तानीह तेभ्यो बिभ्यन्महीधर॥ ३॥

स्थाने त्वामुचितं देशं ब्रह्मनिध्यानकर्मणः ।
वव्रे सोऽद्वैततत्त्वज्ञो मुनिः सर्वात्मभावनः ॥ ४ ॥

तुङ्गापगापयःस्रोतोमारुतान्दोलितद्रुमे ।
त्वय्येव रमते चित्तं विगतान्यस्पृहं मम ॥ ५ ॥



# १९

## ॥ श्रीजगद्गुरुचन्द्रशेखरभारती-स्वामिनः ॥

[ श्रीजगद्गुरुपीठशिष्यकोटिप्रविष्ट—विद्वच्छिरोभूषण—विद्यावि-शारद-इत्यादिबिरुदालंकृतेन मैसूर् महाराजास्थानधर्माधिका-रिणा कुणिगल् रामशास्त्रिणा विरचितम् ]

एते १८९२ तमे क्रैस्तवर्षे नन्दनाब्दाश्विनकृष्णैका-दश्यां श्रृङ्गगिरौ प्रादुरभूवन् । पूर्वं नरसिंहशास्त्रिण इति नाम्ना समलंकृताः । एतेषां पितामहाः सम्यगधीतशब्द-शास्त्राः सुब्बाशास्त्रिण इति प्रसिद्धाः प्राक्तनसुकृतपरि-पाकवशात् पूर्वे वयसि विरक्तभावाः स्वगृहान्निर्गत्य शीता-चलं प्राप्ता इति शोश्रूयते; अतीतेषु कतिपयेषु वर्षेषु तदात्वे श्रृङ्गगिरिजगद्गुरुपीठमलंकुर्वाणाः निरशनतपः-साम्राज्यवैभवचणाः श्रीजगद्गुरुश्रीमन्नरसिंहभारतीस्वामिनः सुब्बाशास्त्रिणां पाण्डित्यं मनोभावं च विदित्वा श्रृङ्ग-गिरिमानाय्य गृहक्षेत्रादिकं वितीर्य दत्वा चावलम्बनमा-स्थानपण्डितत्वेन न्ययोजयन्निति च । शास्त्रिणां द्वे अपत्ये एकः पुत्र एका पुत्री अजनिषाताम् । श्रीजगद्गुरूणा-

माज्ञामनुसरन्तस्तेषां परमानुग्रहपात्रं भूत्वानेकेषामन्ते-वासिनां काव्यव्याकरणादिग्रन्थप्रवचनेन कालमत्यवाहयन्निति च ज्ञायते ।

श्रीमतां चन्द्रशेखरभारतीस्वामिनां पूर्वाश्रमजनका नाम्ना गोपालशास्त्रिणो बाल्ये वयसि पितृसकाशादधीतकाव्यनाटकालङ्काराः ततः शृङ्गगिरिश्रीशारदापीठाधिष्ठितानां सुप्रसिद्धमहिमातिशयानां श्रीमज्जगद्गुरुश्रीसच्चिदानन्दशिवाभिनवनरसिंहभारतीस्वामिनां सन्निधावधीतन्यायभागा यथासंभवं कृतवेदाध्ययनाश्च सन्तः यथाशक्ति स्वाश्रमोचितनित्यकर्माण्यनुतिष्ठन्तः श्रीमदास्थानपरिपोषिता आसन् ।

एतेषां धर्मपत्नी च साध्वीमणिः लक्ष्म्यम्बा स्वकुटुम्बभरणपर्याप्तद्रव्याद्यानुकूल्याभावेऽपि देशकालभाग्यायत्तद्रव्येणैव सन्तुष्टा पतिचित्तानुगामिनी तत्सेवापरा सन्तुष्टान्तरङ्गा चासीत् । अस्यां चतुर्दशापत्यानि समजायन्त । जन्मान्तरकर्मविपाकवशात्तेषु त्रयोदशान्तरितान्यभूवन् । वंशाङ्कुरभूतमेकमेव पुमपत्यमवाशिष्यत । प्रारब्धकर्मवशात्समायातापत्यवियोगेनात्यन्तदुःखितावेतौ दम्पती अवशिष्ट एकोपि वा पुत्रः स्वसंसर्गाद्दूरीकृतश्चेद्दीर्घमायुः प्राप्य जीवेदिति निश्चित्य स्वाशयं तदानीन्तनशृङ्गगिरिश्रीमठीयसर्वाधिकारपदवीमधिगतेषु ब्रह्मश्रीयुत वे. श्रीकण्ठशास्त्रिषु व्यजिज्ञपताम् । शास्त्रिणस्तु तत्कालोचितबहुतरसमाधानवचनैस्तौ दम्पती समाश्वास्य तं बालकं स्वगृहे विनिवेश्य

स्वीयपोष्यगणप्रविष्टं कृत्वा तदारभ्य गैर्वाणीं विद्यामध्यापया-मासुः । एतावति काले अयं बालब्रह्मचारी द्वादशवार्षिकः शृङ्गगिरिस्थाङ्गलकलाशालायां (मिडल्स्कूल्) पठित्वा दत्त्वा च परीक्षां (लोयर् सेकेण्डरि) प्रथमकक्षायामुत्तीर्णोऽत्यन्त-सूक्ष्मबुद्धिः प्रतिभाशाली चासीत् । अस्मिन्विनयसंपत्तिः सहभूरिवाभूत् । तादृशान्सद्गुणानसकृत्परिशीलयन्तो ब्रह्म-श्री श्रीकण्ठशास्त्रिण एतल्लेखकश्चाश्चर्ययुक्ताः सन्तः श्रीश्री-जगद्गुरुमहास्वामिनां सन्निधाने ऽयजिज्ञपन् । गुरुवर्यास्तु तदा तदा शृङ्गगिरिस्थसद्विद्यासंजीविनीपाठशालागमनस-न्दर्भे एनं नरसिंहशास्त्रिणमन्यैर्विद्यार्थिभिः सह परीक्ष्याने-नोत्तरितं प्रश्नानुरूपं प्रतिवचनं श्रुत्वा विशेषतोऽभिन-न्दन्ति स्म । अथ पुनरस्य बालब्रह्मचारिणो विनयप्रति-भाकर्मश्रद्धाप्रभृतिसद्गुणान् परिशीलयतां श्रीश्रीगुरुवर्याणां हृदये अयं नरसिंहशास्त्री स्वशिष्यतां प्राप्य शृङ्गगिरि-मठे उत्तराधिकारपदं निर्वोढुमर्हं इत्यभिप्रायविशेषोऽङ्कु-रितः ।

अत्रान्तरे श्रीमच्छंकरभगवत्पाददिव्यावतारपरिपूतका-लटीक्षेत्रपरिष्करणार्थं महास्वामिनां संप्राप्तः शृङ्गगिरितः प्रस्थानसमयः । तदा अन्तरङ्कुरितस्वाभिप्रायविषयं नर-सिंहशास्त्रिणमपेक्षितयावदानुकूल्यं परिकल्प्य वृद्धाभ्यां जननीजनकाभ्यां सह शृङ्गगिरिनगरे एव स्थित्वा सद्वि-द्यासंजीविनीपाठशालायां तर्कशास्त्रमध्येतुमाज्ञाप्य महा-स्वामिनः शृङ्गगिरितः प्रातिष्ठन्त ।

तर्कशास्त्राध्ययनप्रारम्भप्रभृति वर्षत्रयपरिमितकाले पाठशालावार्षिकपरीक्षायां नरसिंहशास्त्रिणा लिखितां यात्रायां विद्यमानश्रीगुरुवर्याणां विमर्शार्थमागतां प्रश्नानुगुणामनतिसंग्रहां नातिविस्तरां विशेषार्थगर्भितामुत्तरपत्रिकां परामृश्य महास्वामिनां हृदये नरसिंहशास्त्रिविषये पूर्वमङ्कुरितोऽभिप्रायविशेषः पल्लवितः पुष्पितश्चासीत् ।

श्रीश्रीमहास्वामिनः स्वोद्दिष्टं कालटीक्षेत्रपरिष्करणं निर्वर्त्य शृङ्गगिरिं प्रत्यागत्य नरसिंहशास्त्रिणः शान्तस्वभावं विद्याभ्यासङ्गविषये आसक्त्यतिशयं गुरुदेवताभक्तिविशेषं नित्यकर्मानुष्ठानपरतां च स्वयं समालोच्य,

"संसारनामकसरिन्नाथोत्तरणे तवास्ति यदि वाञ्छा ।
बालक शृणु मद्वचनं श्रुतिमस्तकसंमतं हितोदर्कम् ॥१॥

प्रविधाय सशिखवपनं छित्वा यज्ञार्थमादृतं सूत्रम् ।
स्वीकृतपारमहंस्यः स्थिरतरसाधनचतुष्टयोपेतः ॥ २ ॥

श्रद्धाभक्तियुतात्मा प्रविचारय तत्त्वमात्मनः सुचिरम् ।
सद्गुरुमुखाम्बुजातस्रवदागमशीर्षवाक्यपीयूषैः ॥ ३ ॥"

इत्येभिस्त्रिभिः पद्यैरनुगृह्य वेदान्तशास्त्राध्ययनोपयोगिपूर्वमीमांसाशास्त्राध्ययनाय कल्याणनगरे स्वसंस्थापितायां भारतीयगीर्वाणप्रौढविद्याभिवर्धिनीपाठशालायां विद्यार्थित्वेनैनं संप्रेष्य विश्रान्तिमनुभवन्तः शृङ्गगिरिनगरे अभूवन् ।

एवमतीते वर्षपरिमिते काले श्रीमहास्वामिनां पाञ्चभौतिकशरीरवियोगकाल आसन्न इव पर्यदृश्यत । तदा श्रीगुरुवराः स्वमनसा शिष्यत्वेन परिगृहीतान् नरसिंहशास्त्रिणः शृङ्गगिरिं प्रत्यानेतुमेतल्लेखकमाज्ञापयन्ति स्म । स च स्वमुखतो विदितपूर्वगुरुवरमनोभावे महीशूरमहाराजश्रीमन्नालवडिकृष्णराजप्रभुवरे प्रकृतसन्दर्भं गुरुवराणामाज्ञां च विज्ञाप्य कल्याणनगरतो नरसिंहशास्त्रिणमानीय यावच्छृङ्गगिरिं प्रापत्तत: पूर्वस्मिन्नेव दिवसे गुरुचरणाः पाञ्चभौतिकं कलेबरमन्तरधापयन् । इतः पूर्वमेव सम्यग्विदितगुरुवराशयः श्रीकृष्णराजमहाप्रभुः स्वयमेव गुरूणामभिप्रायं प्रकटयित्वा तदनुसारेणैव नरसिंहशास्त्रिणस्तुरीयाश्रमं स्वीकारयित्वा शृङ्गगिरिश्रीजगद्गुरुपीठे पट्टभद्रान् कारयितुं समाज्ञापयत् । तदनु १९१२ (1912) तमे हूणवर्षे परिधाविवत्सरीयचैत्रकृष्णषष्ठ्यां नरसिंहशास्त्रिणो यथाविधि तुरीयाश्रमं स्वीकृत्य श्रीगुरूणामधिष्ठाने तदन्तेवसतां सत्यानन्दसरस्वतीस्वामिनां सकाशान्महावाक्यानि संगृह्य यथाज्ञं गुरूणां श्रीचन्द्रशेखरभारतीति योगपट्टमलभन्त । तर्कशास्त्रे समग्रपाण्डित्यं संपाद्य पूर्वगुरूणां सन्निधाने वेदान्तशास्त्रग्रन्थाननवशेषमधीत्य तर्कवेदान्तशास्त्रयोरसाधारणं पाण्डित्यं संपादितवत्सु वेदमूर्ति-ब्रह्मश्री-हानगल् विरूपाक्षशास्त्रिषु इतः पूर्वमधीतावशिष्टतर्कग्रन्थान् प्रस्थानत्रयभाष्यग्रन्थांश्च वत्सरद्वयपरिमिते काले समग्रमधीत्य तान्सर्वानपि ग्रन्थान् शिष्यानपाठयन् ।

किंच स्वगुरुभिरारब्धं प्रवर्त्यमानं श्रीशारदाम्बादेवा-लयमनवशेषं समाप्य स्वगुरूणामधिष्ठानोपरि सुन्दरमेकं शिलामयदेवालयं निर्माप्यामृतशिलामयीं स्वगुरुवरप्रति-कृतिं कारयित्वा श्रीशारदाम्बाकुम्भाभिषेकश्रीगुरुमूर्तिप्र-तिष्ठामहोत्सवं स्वगुरूणामत्यन्तप्रीतिभाजनं धर्ममूलमिति तदनुगृहीतान्वर्थलाञ्छनं महीशूरपुराधीशं श्रीमत्कृष्णराज-महाप्रभुं स्वयं शृङ्गगिरिमानाय्य तत्समक्षं महोत्सवो निर्व-र्तनीय इति स्वाशयं प्रभुवराय समसूचयन्। सोऽप्यास्तिक-शिरोमणिस्तदपेक्षां सफलयितुकामः स्वयं शृङ्गगिरिनगर-मागम्य १९१६ तमे हूणशके नलवत्सरीयवैशाखकृष्ण-प्रतिपदि श्रीशारदाकुम्भाभिषेकश्रीगुरुमूर्तिप्रतिष्ठासंदर्शनान-न्दमनुभूयैहिकामुष्मिकश्रेयोभाजनमभूत्।

एवं श्रीचन्द्रशेखरभारतीस्वामिनस्तुरीयाश्रमस्वीकारमा-रभ्यैकादशवर्षपरिमितं कालं शृङ्गगिरिनगर एव वसन्तः स्वस्थचित्तास्तर्कवेदान्तशास्त्राण्यध्यापयन्तः स्वाश्रमोचितदैनं-दिनकर्माणि यथावदनुतिष्ठन्तः परमानन्देनानैषुः।

ततोऽमुना १९२४ तमे हूणवत्सरे श्रीकालटिरामे-श्वरप्रभृतिक्षेत्रयात्रां निमित्तीकृत्य शृङ्गगिरिनगरतः प्रस्थाय चतुरो वत्सरान् देशपर्यटनमतानिषुः। तदवसरे श्रीश्री-गुरुवरैः तत्र तत्र शिष्यजनानुद्दिश्य कृतं धर्मोपदेशं पण्डितगोष्ठ्यां प्रवर्तिततर्कवेदान्तशास्त्रवाक्यार्थं च श्रुत्वा तस्माद्यथोचितं प्रयोजनं प्राप्नुवत्सु शिष्यजनेषु संजात-भक्तिगौरवमेतैः संचरितदेशेषु संजातां सुप्रसिद्धिं गुणै-

कपक्षपात्यास्तिकसामान्ये विस्तृतां श्लाघां चेयत्तया परिमातुं न कोऽप्यपारयत् । एतल्लेखकः सर्वदा सहैव स्थित्वा सर्वमिदं साक्षादन्वभूदित्येतद्विषये प्रमाणान्तरस्यावश्यकता नास्त्येव ।

स्वगुरुभिरद्वैतमतावलम्बिनां कृतघ्नतापरिहारार्थं शिष्यकोट्यभ्युदयनिःश्रेयसार्थं च कालटिक्षेत्रे प्रतिष्ठापितश्रीमच्छंकरभगवत्पादसंनिधौ विशालमेकं पाठशालामन्दिरं ब्राह्मणाग्रहारं चाधिकवित्तव्ययेन निर्माप्य तत्राद्वैतवेदान्तपाठशालां वेदपाठशालां च स्थापयित्वा वैदिकमतावलम्बिनां महतीमुपकृतिमकार्षुः ।

स्वगुरूणां श्रीमत्सच्चिदानन्दशिवाभिनवनरसिंहभारतीस्वामिनां जन्मभूमौ मैसूरुपुरातनाग्रहारे (हळेअग्रहार) तेषां जन्मभूप्रदेशमेतल्लेखकद्वारा संपाद्य एतत्संलग्नं विस्तृतं प्रदेशान्तरं श्रीमन्महाराजराजकीयस्थानात्संपाद्य तत्रैकलक्षपरिमितरूप्यकाणि व्ययीकृत्य सुन्दरं विशालं शिलामयमेकं मठं निर्माप्यामृतशिलामयीं स्वगुरुप्रतिकृतिं संभृत्य धर्ममूलस्य गुरुभक्ताग्रेसरस्य श्रीमन्महाराजनल्वडिकृष्णराजप्रभुवरस्य साहाय्येन तत्समक्षमेव १९२४ तमे हूणशकवर्षे रुधिरोद्गारिवत्सरीयफाल्गुनकृष्णैकादश्यां स्वगुरुमूर्तिप्रतिष्ठाकुम्भाभिषेकमहोत्सवं सविशेषं प्रवर्त्य स्वगुरुभक्तिं शिष्यगणे प्रदर्श्य गुरुभक्तिरूपकृतार्थतासंपादनमार्गं प्रादर्शयन् ।

किंच एतैश्चन्द्रशेखरभारतीस्वामिभिर्महीशूरजनपदे शिव-क्षेत्रत्वेन सुप्रसिद्धे कपिलानदीतीरवर्तिनि गरलपुर्याख्ये (नंजनूगूडु) ब्राह्मणाग्रहारे आलयमेकं निर्माप्य तस्य शंकरमठ इति नाम विधाय तत्र मठे श्रीरामलक्ष्मणसीता-प्रतिकृतीः श्रीमच्छंकरभगवत्पादप्रतिकृतिं च प्रतिष्ठाप्य वेद-पाठशालास्थापनद्वारा वैदिकविद्याप्रचारायोत्तेजनमकारि ।

अपि च शृङ्गगिरिक्षेत्रे स्वगुरुस्मारिकां विशालामेकां धर्मशालां निर्माप्य तत्क्षेत्रसंदर्शनार्थमागतानां शिष्यजनानां सुखवसतेरानुकूल्यं परिकल्पितमासीत् ।

एवमतीतसप्तविंशतिसंवत्सरात्मके काले एतैर्निर्वर्तितं सकलमपि कार्यजातं

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥"

इति भगवदुपदेशानुगुणं श्रीगुर्वर्पणमकुर्वन् ।

एतेनैतेषां गुरुभक्तिर्गुरूणामनुग्रहश्चैतेषु कीदृगिति वाचका एव विभावयेयुः । गुरुभक्तेर्निदर्शनत्वेन स्वगुरुभिरारभ्यासमापितं श्रीमच्छंकरभगवत्पादकृतविवेकचूडामणि-नामकवेदान्तग्रन्थव्याख्यानं परिसमाप्यानायासेनाद्वैततत्त्व-ज्ञानसंपादनेच्छूनामास्तिकजनानां महोपकारमतानिषुः ।

संप्रति कलिमहिम्ना प्रतिक्षणं कालव्यत्यासे प्रादुर्भवति तद्द्वारा तदा तदा संभाव्यमानान्क्लेशाननुभवन्तोऽपि वेद-

शास्त्रमर्यादामतिलङ्घ्य वर्तितुं मनागपि नेच्छन्ति। यावच्छक्यं सत्कर्मसदाचाराननुतिष्ठन्तो गुरुभावनया स्वसमीपमागतानां शिष्याणां धर्मतत्त्वं तत्प्रयोजनं च बोधयन्तः शृङ्गगिरिपीठप्राचीनसंप्रदायं परिशुद्धतां च परिपालयन्तः पीठप्रतिष्ठापकानां पूर्वाचार्याणाममोघं संकल्पं सफलयन्तश्च वर्तन्त इत्येतत्सर्वमास्तिकाद्वैतमतावलम्बिशिष्याणां प्राक्तनजन्मसुकृतविशेषफलमेवेति वक्तुं न संकोचलेशस्यावकाशः।

इत्थंभूता महात्मानः शृङ्गगिरिपीठमलंकुर्वन्तः शिष्यगणमनुगृह्णन्त्वित्यास्तिकमहाशयाः सर्वेऽप्यान्तरङ्गिकभक्तिभावेन जगदीश्वरं प्रार्थयन्त इत्येतल्लेखकः सर्वथा प्रत्येति ॥

चन्द्रः शेखरतामवाप्य रमते यस्या हि सा भारती
देवी लोकशुभंकरी गुरुवरः पुंरूपिणीतीष्यताम्।
यद्वाथर्वशिखास्वहं ननु भविष्यामीति या भारती
स्वाङ्गा सैव हि चन्द्रशेखरवपुर्जातेति जानीमहे ॥



# २०

## ॥ आचार्यनुतिः ॥

[ महामहोपाध्याय-मीमांसाकण्ठीरव-इत्यादिबिरुदालंकृतेन ब्रह्मश्रीवैद्यनाथशास्त्रिणा विरचितः ]



श्रीचन्द्रशेखरगुरो भवदीयपाद-
पाथोजयोः सविनयं विनिवेदितेयम् ।
श्रीवैद्यनाथकृतिना मधुपेन गीता
झंकाररीतिनुतिरातनुतां प्रमोदम् ॥

इह खलु निखिलदुःखजलधिनिमग्नजगदुद्दिधीर्षावशंवदेन सकलसुरगणमनीषितपूरणापदेशपरिगृहीतपञ्चजनजन्मना अद्वैतविद्यामयसुधाझरीवर्षणसुधाकरेण स्वाभाविकद्वैतग्रहतमिस्राकर्तनविकर्तनेन मायापिशाचिकासमुच्चाटनधुरीणमन्त्रजपमुखरेण जगतां शिवंकरेण साक्षाच्छंकरस्वरूपेण तत्र भगवता श्रीशंकराचार्यवर्येण समग्रमेदिनीमण्डलमण्डनायमानकर्णाटकसीमन्तिनीसीमन्तमणिमालायिते भगवत्सेवासुखसमास्वादलोलुपमानसेनेवाहमहमिकासमायातेन सुरनिकरेण विराजिते निरवधितपश्चर्यानिष्यन्दी-

कृतान्तरङ्गऋष्यशृङ्गादिमुनिबृन्दसमुदञ्चिते परमपावनीभूत-
तुङ्गभद्राप्रवाहपरिपूतपारिसरप्रदेशे पुराणेतिहासप्रतिपाद्याने-
ककथानकयाथार्थ्याधिगमनायेव विनिर्मितचित्रनिकरपरिक-
लितदेवालयादिपरिशोभिते गुरुभक्ताग्रगण्यमहीपतिवरेण्यश्री-
मन्महीशूरमहाराजाधिराजविनयसाम्राज्ययशःपताकायमाने
श्रीशृङ्गगिरिपुण्यक्षेत्रे प्रतिष्ठापितं ब्रह्मजिज्ञासाङ्गसाधनचतुष्ट-
याविष्करणायेव दिशि दिशि प्रतिष्ठापितानामाम्नायपीठा-
नामन्यतमं विद्यारण्यादिभिर्ब्रह्मर्षिभिरध्युषितं कर्णाटकसिं-
हासनवरमधितिष्ठन् श्रीमत्परमहंसेत्याद्यनेकामोघबिरुदाङ्कितो
विद्यालयाद्यनेकधर्मस्थानपरिष्करणपरिचारितधर्माधिदेवताविः
नोदनबद्धादरो दुर्निवारतापत्रयसंतप्तप्रजासंघातप्रार्थनापरि-
गृहीतलोकानुग्रहयात्रासमयोपदिष्टज्ञानमार्गसंपादितजगत्क-
ल्याणो निष्कलङ्कब्रह्मचर्यानुष्ठानसमनन्तरतुरीयाश्रमस्वीका-
रप्रकटीकृतसंन्यासविधायकजाबालश्रुतिरहस्यः सकलतन्त्रा-
र्थव्याख्यानोपन्यासादिचातुरीधुरीणतासमुपलम्भितसर्वज्ञता-
चिह्नालंकृतश्रीशंकरापरावतारः श्रीशारदाम्बाचरणसेवासमा-
सक्तस्वान्तः श्रीचन्द्रमौलीश्वररत्नगर्भगणेशाभ्यर्चनातत्परान्त-
रङ्गः शिष्यजनसादरसेवास्वीकरणसमुत्तीर्णसप्तविंशतिहायनो
निधानं निःसीमतपःसंपदां प्रत्यादेशोऽरिषड्वर्गस्यायतनं
विद्यानां परिणामः शिष्यजनार्जितसुकृतशतानामालवालः
कारुण्यलतायाः संयमीन्द्रः श्रीचन्द्रशेखरभारतीयतीन्द्र इतो-
ऽप्यतिशयितेन निष्प्रत्यूहतपःसन्तानारोग्यादिभाग्येन सुचिरं
जीयात्; गुरुसेवासमुत्कण्ठायत्तस्वान्तानां तदन्तेवासिनां

तदीयचरणसेवासुखं निरन्तरं निरन्तरायं च संवर्धतामिति च सर्वान्तर्यामिणं भगवन्तं परमात्मानं सप्रमोदं सप्रश्रयं साञ्जलिबन्धं च प्रार्थयामहे ॥



# २१

## ॥ अद्वैते आनन्दस्वरूपविवेचनम् ॥

[कालटीवेदान्तपाठशालाऽध्यक्षेण पि. एस्. वेङ्कटाचल-
शास्त्रिणा विलिखितम् ]



निगमशतवनालीगूढमध्यात्मतत्त्वं
करतलफलवद्ये प्राचकाशन्यतीन्द्राः ।
अकृतसुकृतदूराञ्छंकराचार्यपादा-
ननिशमधिहृदब्जं शर्मणे कुर्महे तान् ॥

शृङ्गाद्रिदेशिकेन्द्रांस्तुङ्गातीरे तपोरताननिशम् ।
गङ्गाधरावतारान्भङ्गायांहोगणस्य भज चेतः ॥

लोके तावत् सर्वेषामपि जनानां सुखप्रेप्सा दुःखपरिजिहीर्षा च सहजे इति सार्वजनिकमेतत् । अथापि सुखसाधनं नानुतिष्ठन्ति ; प्रत्युत दुःखसाधनमेव । तदुक्तमाभियुक्तैः "सुखमिच्छन्ति ते मूढा नेच्छन्ति सुखसाधनम् । नेच्छन्ति दुःखलेशं वा तद्धेतौ सततं रताः ॥" इति । किं कारणं ? सुखस्वरूपस्य तत्साधनस्य चाज्ञानमेव । ननु सर्वोऽपि सुखस्वरूपं तत्साधनं च न जानातीति विप्रतिषिद्धं, पाम-



श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनः
महीशूरपुरसचिवः सर्-के. शेषाद्रि आर्यश्च ।



श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनः
महीशूरपुरसचिवः वि. पि. माधवरायश्च ।

रा न जानन्तु, पण्डितः कथं न जानाति? यतः सुख-स्वरूपं तत्साधनं च न तथा दुर्विज्ञेयम्; अपितु सत्सु गृहा-रामक्षेत्रादिषु स्रक्चन्दनवनितादिषु च सुखं जायते, असत्सु न जायत इत्यन्वयव्यतिरेकसिद्धम्। तेषां साधनं धनम्। अत एव सर्वेऽपि ऐककण्ठ्येन वदन्ति 'धन-वान्सुखी' इति। प्रयतन्ते च धनसंपादनायेति चेत्, सत्यमेवमुपापत्स्यत यदि स्रगादिषु सत्सु नियमेन सुखम-भविष्यत् असत्सु च नाभविष्यत्। न तथा प्रतीमः। यतः सत्स्वपि स्रगादिषु कार्यान्तरवैयग्र्यदशायां सुखं नानुभवामः। असत्स्वपि तेषु सुषुप्तौ सुखमनुभवामः, सुप्तोत्थितस्य 'सुखम-हमस्वाप्सम्' इति परामर्शदर्शनात्। तर्हि किं सुखम्? ब्रह्मैव सुखम्, "विज्ञानमानन्दं ब्रह्म" "आनन्दो ब्रह्मेति व्यजा-नात्" इत्यादिश्रुतिभ्यः। ब्रह्मणः सुखरूपत्वेऽस्माकं किमा-यातम्? अस्माकमपि सुखरूपत्वमेवायातम्। अहो किमु-च्यते गुडं मधुरमिति लवणमपि किं मधुरम्? विषमो दृष्टान्तः। गुडलवणे मिथोऽत्यन्तं भिद्येते; न तथा जीवब्रह्मणी। कस्य हेतोः? "तत्त्वमसि" "अहं ब्रह्मास्मि" "क्षेत्रज्ञं चापि मां विद्धि" इत्यादिश्रुतिस्मृतिशतेभ्यः। अपिच "अयमात्मा परानन्दः परप्रेमास्पदं यतः" "आत्मला-भान्न परं विद्यते" इत्यादिप्रमाणैरात्मा आनन्दरूप इत्यव-गम्यते। नन्वात्मनः सुखस्वरूपत्वे तस्य सर्वदा भासमान-त्वेन किमिति सुखं सर्वदा न भासते? सुखानुभवकरणस्य मनसश्चाञ्चल्यात्। यदा स्थिरमन्तःकरणं तदा आत्मसुखं

10

प्रतिबिम्बते। यथा चञ्चले दर्पणे मुखं न प्रतिबिम्बते निश्चले तु यथावत्प्रतिबिम्बते तद्वत्। मनसश्चाञ्चल्ये को हेतुः? शब्दादिषु विषयेष्वाशा। तत्र को हेतुः? विषयात्सुखं जायत इति भ्रमः। किं विषयात्सुखं जायते इति भ्रमः? सत्यमेवम्। तर्हि विषयात्सुखानुभवः कथं? उच्यते—यत्किंचिद्विषयवाञ्छायां सत्यां मनश्चञ्चलं भवति। अत आत्मसुखं न भासते। विषयलाभेन तद्वाञ्छायां प्रतिनिवृत्तायां मनः स्थिरं भवति। तत्र च स्वरूपसुखं भासते। अतो विषयात्सुखं जायत इति भ्रमः। एवमेकविषयवाञ्छायां तद्विषयलाभेन निवृत्तायां तत्क्षणे मनसः स्थैर्ये आत्मसुखं भासते। पुनरन्यविषयवाञ्छायां समुन्मिषन्त्यां चित्तं विक्षिपति, सुखं च न भासते। तद्विषयलाभेन चित्तस्थैर्ये पुनः सुखं भासते। तदुक्तं पञ्चदश्याम् "विषयेष्वपि लब्धेषु तदिच्छोपरमे सति। अन्तर्मुखमनोवृत्तावानन्दः प्रतिबिम्बते" इति। अपिच सर्वाऽपि वाञ्छा किं तत्तद्विषयलाभेन प्रतिहन्तुं शक्या? नैव। अतो यावतेयं सुखप्रेप्सा नित्यनिरतिशयसुखप्राप्त्या समूलकाषं कषिता न भवति, तावता पुरुषधौरेयमपि पुनः पुनरुदित्वरी सा करोत्यधरोत्तरामिति हन्त महदिदं विजृम्भितं विषयतृष्णापिशाचिकायाः। तदुक्तं श्रीमद्भागवते एकादशस्कन्धे "कुरङ्गमातङ्गपतङ्गमीनभृङ्गाहताः पञ्चभिरेव पञ्च। एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च॥" अयमभिप्रायः—शब्दस्पर्शरूपरसगन्धात्मकेषु पञ्चसु विषयेष्वेकैकविषयसुखवाञ्छया तावत् एकै-

केन्द्रियवशगानामीदृशी दुरवस्था यदि कुरङ्गादीनां किमुत सर्वैरपीन्द्रियैः सर्वानपि विषयानसकृदासेवमानानामस्माकमिति। अतः किं करणीयम्? आशानां समूलमुन्मूलनम्। किमाशानां मूलम्? विषयेष्विष्टसाधनत्वभ्रमः। केनासौ निवर्तनीयः? आत्मैव नित्यानन्दस्वरूपः; विषयास्तु केवलं मिथ्याभूताः सुखाभासजनकाः सर्वेन्द्रियाणां तेजसो ग्लपयितारश्च; तदुक्तं कठवल्ल्याम्— "श्वोभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः" इति; इति विवेकेन। अपिच विषयेषु दोषदर्शनं विषयाशानिवारणे कारणम्। तदुक्तमाचार्यपादैः— "विरक्तितीव्रत्वनिदानमाहुर्भोग्येषु दोषेक्षणमेव सन्तः" इति। किंच विषयसुखं भगवानिन्दति गीतायाम् "ये हि संस्पर्शजा भोगा दुःखयोनय एव ते। आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः।" इति। अपिच यावद्यावदाशानाशः तावत्तावदानन्दवृद्धिः। अयमर्थस्तैत्तिरीयके सार्वभौमानन्दप्रभृतयो ब्रह्मानन्दपर्यन्ता आनन्दा अकामहतश्रोत्रियप्रत्यक्षा भवन्तीति व्याचक्षणया आनन्दवल्ल्या प्रकाशितः। उक्तं चाभियुक्तैः— "यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥" इति। अतः किं सिध्यति? सर्वथा कामप्रमोके नित्यनिरतिशयात्मानन्दाविर्भावः सिध्यति। तदुक्तम् "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति। कामस्य चात्मस्वरूपाज्ञाननिबन्धनत्वात् आत्मसा-

त्कारेणाज्ञाननिवृत्तिद्वारा प्रमोक्षः सम्पादयितव्यः। तर्हि किमिदानीमात्मसाक्षात्कारो नास्ति? को ब्रवीत्यात्मसाक्षात्कारो नास्तीति? किं तर्हि? आत्मयाथात्म्यसाक्षात्कारो नास्तीति ब्रूमः। किमिदमात्मयाथात्म्यम्? नित्यशुद्धबुद्धमुक्तनिरतिशयानन्दस्वरूपत्वादिलक्षणम्। किमात्मा निरतिशयानन्दरूपः? सत्यम्। अत एव परमप्रेमास्पदत्वमात्मनो दृश्यते। उक्तं च मैत्रेयीब्राह्मणे "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति" इति। नन्वेवं सति आत्मनि भासमाने किमिति तद्याथात्म्यं निरतिशयानन्दरूपत्वं न भासते? किं पुरुषे भासमाने तद्याथात्म्यं न भासते? उच्यते— पुरुषे भासमानेऽपि सति नीहारेण प्रावरणे किं तद्याथात्म्यं भासते? नैव। को हेतुः? नीहारेण प्रावरणम्। तर्हि प्रकृतेऽप्यज्ञानेनावरणात् आत्मयाथात्म्यं न भासत इति ब्रूमः। तर्हि कथमसावात्मयाथात्म्यसाक्षात्कारः संपादनीयः? वेदान्तविचारेणैव "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यादिश्रुतिभ्यः। एवं विचारजनितसाक्षात्कारवान् वासिष्ठे चतुर्धा प्रविभक्तः ब्रह्मवित् ब्रह्मविद्वरः ब्रह्मविद्वरीयान् ब्रह्मविद्वरिष्ठ इति। इत्थं ब्रह्मविदश्चतस्रो भूमिकाः। तुरीयां भूमिमारूढं ब्रह्मविद्वरिष्ठमधिकृत्यैव श्रीमद्भागवते इदं श्लोकद्वयं प्रवृत्तम्— "देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत् स्वरूपम्। दैवादपेतमथ दैववशादुपेतं वासो यथा परिगतं

मदिरामदान्धः ॥ तिष्ठन्तमासीनमुत व्रजन्तं शयानमुक्षन्त-मदन्तमन्नम् । स्वभावमन्यत् किमपीहमानमात्मानमात्मस्थ-मतिर्न वेद ॥" इति । एवमात्मसाक्षात्कारवान्कृतकृत्यः । न तस्य कामयितव्यं कर्तव्यं वा अवशिष्यते । तदुक्तं वाजस-नेयके—" आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । कि-मिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्" इति । आस्तामेवम् । कथमात्मनि नित्यप्रकाशरूपे इदमज्ञानमागतम् ? न हि नित्य-प्रकाशे सवितरि तमः सम्बन्धुमर्हति । उच्यते— स्वयैव कल्पितं पेचकेनेव सवितरि तमः । अपिच 'अहमज्ञः' इति प्रत्यक्षतोऽज्ञानेऽनुभूयमाने कथमज्ञानमागतं कदा आ-गतमिति नायमवसरः प्रश्नस्य । किंतु तन्निवारणोपाया-वगतिपूर्वकं तदनुष्ठानस्य । अग्निना गृहे दह्यमाने गृहस्वामी किमग्निं शमयितुं प्रयतते, उत 'अग्न्यागमने किं कारणम् ? नास्ति खल्वागमने प्रसक्तिः' इत्यालोचयंस्तूष्णीं तिष्ठति । एवं रुग्णोऽपि 'नाहमपथ्यं किंचिदप्यकरवम्, कथमसौ रोगः समागतः' इति रोगागमनकारणमालोचयति, उत रोगनिवृ-त्त्युपायम् । अत आत्मयाथात्म्यमावृत्य महान्तमनर्थं पुरस्ता-दुपस्थाप्य क्लेशयदिदमज्ञानं केनोपायेन ध्वंसनीयमिति तदु-पायान्वेषणा करणीया । न च वयं स्वातन्त्र्येण तदुपायमव-गन्तुं प्रभवामः । इत्येवमखिलमालोच्यैव भगवान् सर्वलो-कहितैषी बादरायणो वेदान्तविचारात्मकं ब्रह्ममीमांसाशास्त्रं प्रणिनाय । अथापि तावता न गतार्थता । यतः सूत्रात्मकत्वेन मन्दमध्यममतीनां न यथावदर्थावबोधनक्षमं तच्छास्त्रमि-

त्यालोच्य श्रीमच्छंकरभगवत्पादा महता परिकरेण भाष्य मभाषिषत । येन भाष्येण सर्वोऽपि लोकः सुतरामनुगृहीतो भवति । एतावता किं सिद्धम् ? श्रुतिसूत्रभाष्यैः सर्वलोक हितोपदेष्टृषु सर्वेश्वरबादरायणाचार्यश्रीमच्छंकरभगवत्पादेषु तदुक्तसन्मार्गानुष्ठाननिरतैरस्माभिः सर्वथा कार्तज्ञ्यमव्याजभक्तिपूर्वकं प्रकाशयितव्यं येन वयं तदनुगृहीताः सन्तः कृतार्था भविष्याम इति सिद्धम् ।

अलमलमितरैर्विषयैरल्पसुखोत्पादहेतुभिस्तुच्छैः ।
गुरुराजभक्तिरेका त्वनल्पसुखदा वरीवर्तु ॥



# २२

# श्रीचन्द्रशेखरभारतीनां वृत्तान्त-विशेषः ॥

[महीशूरसंस्थानप्रधाननीत्यास्थानाध्यक्षचरेण बि. ए. बि. एल्. बिरुदभाजा जि. श्रीनिवासार्येण विलिखितः]

श्रीमान् भातु स्वान्ते मम चन्द्रशेखरभारतीस्वामी ।
निर्व्याजपरिचयः सुदृढो मम पुण्येन चिराज्जातः ॥

श्रीमन्तो देशिकेन्द्राः विद्वन्मण्डलमण्डिते कर्णाटदेशेऽभिव्यक्ताः शृङ्गगिर्याख्यमहाक्षेत्रमलंकुर्वाणा अधुना शारदापीठमध्यासीना विराजन्तेतरामिति सर्वेषामतिरोहितोऽयं विषयः ।

इमे चाजन्मनः करुणापूरितमानसाः साधुजनमहनीयजीवना अनितरसुलभैरितितिक्षादिमहागुणैर्महिताश्चकासतीत्यत्र न कापि विशीति । अत्र च साक्षिभूतस्तदीयबाल्यावस्थागतः कश्चन वृत्तान्त इत्थं कर्णपथमवतीर्णो भवति । आसीत्कदाचिच्छृङ्गगिर्यां मानवप्रलयकारिणी महाविषूचिका । एतेषां भगिनी तद्रोगपीडिता समभूत् ।

तदात्वे च विषूचिकाक्रान्तैर्ग्रामाद्बहिः सुदूरे वस्तव्यमिति नियमो व्यधायि ग्रामीणैः। एतेषां पितरौ साधुस्वभावौ विगलितधैर्यौ किंकर्तव्यतामूढौ समपद्येताम्। तत्र चेमे आपन्नबाल्यावस्था अपि प्रौढजनवन्मतिं तितिक्षां च परामवलम्ब्य पित्रोराश्वासमुत्पाद्य करुणापूरितान्तःकरणा महान्तमपि श्रमं तृणाय मत्वा स्वयमेव रुग्णां भगिनीमन्नौषधादिदानेनाश्वासयान्नसतेति।

एतेषां च विद्याभ्यासे महतीं श्रद्धां ग्रहणे बुद्धिपटिमानं धारणे मेधातिशयं च निर्वर्ण्य पण्डिततल्लजा आमोदपरवशास्तदीयं वासगृहमागत्याध्यापयामासुः। इमे च देशिकेन्द्राश्चतुरमतितया बाल्य एव संस्कृतभाषाभ्यासकाले आंग्लभाषामप्यभ्यस्यन्त आसन्। तदानीमेतेषां विद्याभ्यासपटीयस्तां विनयादिसंपत्तिं च समालोक्य प्रीतिभरिता मठीयमहाधिकारिण एतन्मुखादेव वासिष्ठश्रवणं श्रेयोविधायीति निर्णीय तत्पठनमचीकरन्।

एतेषां महाप्रौढविद्याधिषणाप्रसरमवलोक्य पूज्यश्रीमहागुरवः कल्याणपुरीस्थापितायां प्रौढविद्याशालायां मीमांसाध्ययनायेमान्प्राहिण्वन्।

इमे आकारे वयसि चेतरेभ्यश्छात्रेभ्यो न्यूना अपि शास्त्रग्रहणधारणयोराचारे शान्त्यादिगुणेष्वितरानन्तेवसतोऽत्यशेरतेत्यत्र न कोऽपि विप्रतिपद्यते। एतेषां च तदानीं पित्रोरनितरसाधारणी भक्तिः सज्जनगणनीयाऽऽसीत्।

एतेषां तादात्विकी संस्कृतभाषालालिती शास्त्रीयविषयोपपादनसरणिश्च पण्डितविस्मयावहे समभूताम् ।

अयं निवृत्तिमार्गप्रचारचतुरः संन्यासाश्रमोत्कर्षाधायी चेति मत्वा अयमेव शिष्यत्वेन ग्राह्य इति श्रीमहागुरवोऽध्यवास्यन् ।

श्रीमहागुरूणां प्रारब्धार्जितदेहमुमुक्षासमये तत्स्वामिकृतमध्यवसायं प्रतिबोधितेन श्रीमता महाराजेन सामोदं प्रदत्तामनुमतिं गृहीत्वा कल्याणपुरीमागता विद्याविशारदश्रीरामशास्त्रिण एतेषां तत्पित्रोश्च सविधे श्रीमहागुरुसदाकूतमावेदयन् । तदानीमिमे तत्पितरौ चेत्थं विस्मयकरं साधुजनपूजनीयमुत्तरं व्यतरन्— वयमास्माकीनयोगक्षेमनिर्वाहकाणां महागुरूणामाज्ञां शिरसा वोढुं सर्वदोत्सहामह इति ।

यद्यपि श्रीमहास्वामिन एतत्संन्याससमये दैवदौर्गत्येन स्थूलशरीरस्थतया सर्वेषां जनानां समक्षं नाभासन्त, तथापि ते मुक्ततयेश्वरभावमापन्ना ईश्वरः सर्वभूतानामिति प्रमाणतया एतन्मानसे स्थित्वा संन्यासमग्राहयन्नित्येव तत्समये साधुजना अबुध्यन्त । इमे च देशिकेन्द्रा महीशूरपुरमध्यविद्योतमानायां संस्कृतपाठशालायां प्रवर्तितायां महासभायां स्वकीययानितरसाधारण्या गङ्गास्रोतोवत्प्रवर्तितया अधिकरणवाक्यार्थधोरण्या सभास्तारांस्त्रिमतस्थानपि पण्डितान् लब्धान् विस्मितांश्चातन्वन्निनीदं तदानीं तत्र संनिहिताना-

मतिरोहितमिति नात्र किंचिद्वक्तुमहं प्रयते। एतेषां दर्शनमात्रेण दम्भदर्पादिदूषितानामपि जनानां महती शान्तिः संजायेतेति निश्चप्रचं भणितुमुत्सहे। इमे चाचार्यकृतविवेकचूडामण्याख्यग्रन्थस्य तत्त्वप्रकाशिकामतिसरलां गम्भीरां व्याख्यां कृत्वा सर्वानपि जनान् करतलामलकीकृताद्वैतविद्यानकुर्वन्नित्यत्र नाहं संशये।

पाठंपाठं सुशिष्याननवरतमयं शंकराचार्यभाष्यं
  दुःक्षेपं दीर्घकालं क्षणमिव मनुते देशिकेन्द्रः स नित्यम्।
अस्तोकान्पूज्यमन्त्रान् सुविनयसहितो यत्सकाशाद्गृहीत्वा
  भक्त्या पूतो जपित्वा प्रतिदिनमहं स्वं च जाने कृतार्थम्॥



# २३

## ॥ श्रीभगवत्पादमहिमा ॥

[ महामहोपाध्याय-इत्यादिबिरुदभाजा कल्कत्ताविश्वविद्यालयमीमांसाशास्त्राध्यक्षेण नूरणिग्रामाभिजनेन अनन्तकृष्णशास्त्रिणा विरचितः ]



मातामहमहाशैलमहस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

श्रीमन्तः शंकरभगवत्पादाः पञ्चमे वयस्येवोपनीता अधीतनिखिलनिगमागमा मातुरनुज्ञया गृहीतपारिव्राजकधर्मा निरसितचार्वाकादिनास्तिकषड्दर्शना हेयोपादेयविवेचनेन सर्वतन्त्रसिद्धान्तरहस्याख्यस्याद्वैततत्त्वस्य व्यवस्थापनेन षण्मतस्थापनाचार्या जगद्गुरवश्चेति सर्वतो विदितचरा एव । इमे हि इत एव षण्मतस्थापनाचार्याः— यतः सौरगाणपत शाक्त-शैव-वैष्णवमतानि तदीयवामाचारप्रथानिरसनेन समयाचारपङ्क्त्यां प्रत्यतिष्ठिपन्, तदन्तेवासिपरम्परयाऽनुवर्तमानेषु सुप्रसिद्धेषु प्रधानतमेषु स्वीयेषु पीठेषु तत्तत्पीठमधितिष्ठन्तः पूज्यतमाः सर्व एव धर्माचार्याः कुत्रचन सति संभवे स्वयमेव, अन्यथा तु प्रतिनि-

धिद्वारेण पञ्चायतनसगुणदेवताराधनपद्धतिं प्रत्यहं यथासम्भवं प्रस्थानत्रयानुसन्धानादिना वेदान्तश्रवणमननादिप्रक्रियां च नियमेन समाद्रियन्ते, समादरयन्ति च स्वान्तेवासिनस्तत्र तत्र निबन्धादिमुखेन शास्त्रार्थम् ।

उपनिषद्वाक्यानि हि चेतिहासपुराणानि कुत्रचन शिवोत्कर्षं कुत्रचन विष्णूत्कर्षमेवं सूर्यगणपतिशक्तीनां च सगुणानामुत्कर्षं प्रतिपादयन्ति सर्वाणि सगुणस्वरूपाणि समप्रधानान्येव मन्यन्ते 'न हि निन्दा' न्यायेन तत्र तत्र पुराणेषु सगुणस्वरूपविशेषनिकर्षबोधकान्यपि । कथमन्यथा एक एव बादरायणोऽष्टादशमहापुराणादिभिरपि तत्तत्सगुणस्वरूपमेव परस्परविरुद्धमिव प्रशंसितुमर्हति ? पुराणसात्त्विकताराजसतातामसतादिकं हि प्रतिपाद्य सात्त्विकतादिकमेवावलम्बते, न तु कर्तृसात्त्विकतादिकमिति सात्त्विकतादिना पुराणविशेषाणां प्राबल्यदौर्बल्यविचारो निरालम्बन एव । इयमेव नीतिरुपनिषद्वाक्येष्वपि योजनीया । तान्यपि ह्यवान्तरतात्पर्येण तत्तत्सगुणस्वरूपप्रतिपादनेन निराकाङ्क्षाणि न स्वस्वप्रतिपाद्यप्रधानाप्रधानतादिकं गोचरयन्ति । महावाक्यैकवाक्यतया तु निर्गुणपर्यवसायीन्यपि तानि न लेशतोऽप्यवान्तरान्वयबोधदशायामन्यथानयनं संकोचादिकं वाऽर्हन्ति । सति चैवं न केवलं षण्मतानि, किंतु जगतीतले विद्यमानानि सर्वाण्यपि मतानि तत्तदधिकारिदृष्ट्या समप्रधानान्येव मन्यन्ते शङ्करभगवत्पादा इति सत्यमेव ते जगद्गुरवोऽपि ।

अधिकारिभेदेन प्रवृत्तानामपि वाक्यानां संकोचादिनै-कत्रैव पर्यवसानकल्पनायां न केवलं मतसाङ्कर्यं, किंतु वर्णसाङ्कर्यं, धर्मसाङ्कर्यं, किं बहुना? सर्वसाङ्कर्यं समापद्येतेति ।

"संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः" इति कथं भगवान् गीताचार्यो बिभियादपि साङ्कर्यात्। तन्त्रवार्तिके चार्वाकादिदर्शनानामपि धर्मे पर्यवासनमभिप्रयन्तः कुमारिलपादाः, सर्वेषां दर्शनानां ययाकयापि प्रणाल्याऽद्वैतप्रस्थानतां प्रस्थानभेदाभिधे स्वनिबन्धे निरूपयन्तः श्रीमधुसूदनसरस्वत्यश्चाधिकारिभेदेन सर्वदर्शनप्रामाण्यपक्षमेव समादरणीयमाशेरते । सति चैवं ब्रह्मचार्यादिधर्मा गार्हस्थ्याद्यवस्थायामिव व्यावहारिका धर्मा अपि तुरीयावस्थायां स्वत एव निवर्तन्त, इत्यन्ततो गत्वाऽननुष्ठापकत्वलक्षणमप्रामाण्यमुत्तरोत्तरदृष्ट्या पूर्वपूर्वेषां प्रमाणानां नियतमूरीकर्तव्यम्। इदमेवाभिप्रेत्य— अपच्छेदन्यायेन निर्गुणवाक्यानि च तत्तद्योग्यविषयप्रदानेन कस्मिँश्चन पक्षे भगवत्पादमतानुयायिनो व्यवस्थापयन्ति । अत एवेदमप्युपपद्यते, यत्—

"देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥" इति ॥

"देहदृष्ट्या तु दासोऽहं जीवदृष्ट्या त्वदंशकः ।
आत्मदृष्ट्या त्वमेवाहमिति वेदान्तडिण्डिमः ॥"

इति वदन्तो भगवत्पादा अपि द्वैतविशिष्टाद्वैतमते अपि

स्वीयमसाधारणमद्वैतमतमिवावस्थाविशेषमपेक्ष्य प्रमाणमेव मन्यन्त इति व्यवहारदशायामधिकारिभेदेन सकलतान्त्रिक-वैदिकमतसाधुत्वव्यवस्थापनेन युक्तमुक्तम्— न केवलं षण्मतस्थापनाचार्याः, किन्तु जगद्गुरवोऽपीति ।

भगवत्पादा हीमेऽद्वैताचार्या इति प्रसिद्धिं गताः; यत उपवर्षाचार्यादिभिः सर्वेषां वेदान्तवाक्यानां द्वैताद्वैतयोरेव पर्यवसानं, नाद्वैते केवल इति केवलाद्वैतपरतया स्वरसतः प्रतीयमानानामप्युपनिषद्वाक्यानां स्वमतानुगुणं संकोचादिनाऽन्यथानयनेन तत्राप्रामाण्यं व्यवस्थापितम्; तस्य समूलं निरसनेन स्वारसिककेवलाद्वैतवादं सर्वतः प्रचारयन्ति स्म । अद्वैतवादोऽयं भगवत्पादानां न स्वकपोलकल्पितः, किंतु श्रुतिस्मृतिपुराणेतिहासब्रह्ममीमांसादिस्वारस्यसिद्धोऽपीति ।

इमे हि सर्वतन्त्रस्वतन्त्रा अपि; यतः सर्वतन्त्रसिद्धान्तांस्तचादृशान् हेयोपादेयविवेचनेनोपजीव्यैवाद्वैतमतं व्यवस्थापयन्ति । नैयायिकप्रवरा उदयनाचार्या मीमांसकधुरीणाः प्रभाकरकुमारिलपादादयश्च निर्व्याजमत एवाद्वैतवादं प्रशंसन्ति ।

प्रत्यक्षमात्रपारमार्थिकप्रामाण्यं हि चार्वाकमत एव वर्तते, न मतान्तर इति ब्रह्मसाक्षात्कारस्यैकस्यैव मुख्यं प्रामाण्यमित्यद्वैतवादे स्वीकारात् अद्वैतवादश्चार्वाकमतमुपजीवति । प्रपञ्चमिथ्यात्वस्य तत्सांवृतसात्यत्वापरपर्यायस्य स-

दसाद्विलक्षणत्वस्य च स्वीकारात् सौगतमतमारम्भवादप-रिणामवादनिरासेनांशतो वैशेषिकनैयायिकसांख्यपातञ्जला-दिमतं चाद्वैतवाद उपजीवति । सततोर्ध्वगमनाख्यमोक्षस्व-रूपांशं हि स्थूलसूक्ष्मशरीरद्वयसंबन्धराहित्यांशेनाद्वैतिनो-ऽपि स्वीकुर्वते । सांख्याद्यभिमतात्मासङ्गत्वं, पातञ्जलाद्य-भिमतेश्वरनिमित्तकारणत्वम्, उपवर्षाद्यभिमतब्रह्मोपादान-त्वम्, आत्मस्वप्रकाशत्वचैतन्यरूपादिकं मीमांसकाभिमतं पारमार्थिकदशायामप्यद्वैतिनोऽनुमन्यन्त इति व्यक्तिशोऽपि सर्वे प्रायेणाद्वैतिन एव । साम्प्रतमपि भारतवर्षे सर्वात्म-नाप्यद्वैतसिद्धान्तमेवानुसरन्तो यावन्तो वर्तन्ते, तत्सहस्रां-शोऽपि तत्तन्मतान्तरानुयायिनां दुर्लभ एव पृथक् पृथक् परिगणनायामिति नेयमतिशयोक्तिः । निदानं त्वस्य सांप्र-तिकाः सर्वेऽपि धर्माचार्या एव तपस्विप्रवराः, ये खलु कायक्लेशादिकमविगणय्य तत्र तत्र संचारेण सनातनाद्वैत-सिद्धान्तोपदेशेन च स्वजीवनयात्रां निर्वहन्ति । कन्या-कुमारीमारभ्य हिमालयपर्यन्तं तेषु तेषु विशिष्टेषु स्थानेषु भगवत्पादसिद्धान्तप्रचारैकदीक्षाः श्रीशृङ्गगिरिपीठाध्यक्षाणां विशेषतोऽनुचराः परःसहस्राः परिव्राजकप्रवराः परमहं-सप्रवरा वर्तन्ते । "सहस्राणि सहस्रशो ये रुद्रा अधि-भूम्याम्" इति शतरुद्रीवाक्यं शंकरभगवत्पादप्रतिष्ठापित-तत्तत्प्रधानोपपीठाद्यध्यक्षान् धर्माचार्यानेव गोचरयति ।

आत्मनो दिग्विजययात्राप्रसङ्गेन तत्र तत्र बहूनि पीठानि भगवत्पादैः प्रतिष्ठापितानि सांप्रतमपि परम्पराक्रमेण

केचन केचन तपस्विप्रवरा अधितिष्ठन्त्येव । तत्र च भगवतः सदाशिवस्य पञ्चाननता भगवतो गुरुवर्यस्य सान्तेवासिनः श्रीदक्षिणामूर्तेः साक्षात् भगवत्पादस्य वा सान्तेवासिनः स्थूलशरीराणि प्राच्यदक्षिणपाश्चात्योदीच्योर्ध्वाम्नायरूपाणि वा प्रधानानि पञ्चपीठानि । इदं तु न विवादास्पदम्—यदुक्तान्यतमपीठाधिष्ठानमात्रेण धर्माचार्याः सर्वेऽपि शिवावतारतां स्वकृत्यैरभिव्यञ्जयन्ति । सांप्रतं त्वविच्छिन्नपरम्परया मठाम्नायानुसारेणानुवर्तमानं श्रीशृङ्गगिरिपीठं श्रीकामकोटिपीठं च । ज्योतिर्मठं तु विच्छिन्नपरम्पराकमधुनाऽपि केऽपि धर्माचार्या नाधितिष्ठन्ति । शारदापीठं तु कंचन कालमारभ्य "अन्तेलक्षणसमन्वितः" इति मठाम्नायनियमानुसारं धर्माचार्यैरधिष्ठेयमन्वारभत इति वक्तुं शक्यते—यदि श्रीराजराजेश्वरस्वामिपादा एव तदधिष्ठातारः । गोवर्धनमठं तु बहोः कालात् योगपदस्य तीर्थाख्यस्य परिवर्तितस्यावलम्बात् मठाम्नायदृष्ट्या सन्दिग्धमेव प्राचीनं पीठमिति प्रतिभाति । पीठान्तरात् परिव्राजकान्तराद्वा गृहीतदीक्षाः पीठान्तरमधिष्ठितवन्तो वा पीठान्तरमधितिष्ठन्तीत्यस्य नूतनस्य संप्रदायस्यापि गोवर्धनपीठमेव प्रथमतो नेतृतां भजते । सर्वथा— तत्तत्पीठाधिष्ठानमात्रेण सरस्वत्यपरावतारपुरुषता तु तत्राप्यधुनाऽनुभूयत एव ।

शंकरभगवत्पादानामद्वैतसिद्धान्तो भगवद्रामानुजाचार्यैः श्रीमध्वाचार्यैरन्यान्यैराचार्यचरणैस्तदनुयायिभिश्च बहुशस्तदा तदाऽऽक्रान्तोऽपि मण्डनसुरेश्वरादिव्यवस्थापितप्रस्थानवि-

शेषाणां सम्यग्व्यवस्थापनेन प्रकटार्थकार-वेदान्तमुक्तावली-कार-नृसिंहाश्रमयतीन्द्र-मधुसूदनसरस्वती-ब्रह्मानन्दसरस्वती-विठलेशोपाध्यायादिभिर्वादप्रस्थानविधया पद्मपादप्रकाशानन्दवाचस्पतिमिश्रामलानन्दाप्पयदीक्षितादिभिरधिकरणप्रस्थानादिविधया सुष्ठु संरक्षितः। अस्मिन्प्रसङ्गे श्रीशृङ्गगिरिपीठमधिष्ठितवतां श्रीसुरेश्वरविद्यारण्यश्रीसच्चिदानन्दनृसिंहभारतीस्वामिपादानां सर्वदर्शनपारदर्शिनामद्वैतदर्शनसंरक्षणार्थः प्रयत्नो न केनापि विस्मर्तुं शक्यते। इदमेवास्माकं सौभाग्यम्—यत् तपस्विवरेण्याः पूज्यतमाः सांप्रतिकाः स्वनामधन्याः परिव्राट्चक्रवर्तिनः श्रीचन्द्रशेखरभारतीन्द्रपादाः सर्वतन्त्रपरतन्त्रा अपि श्रीविद्यारण्यादय इवाद्वैतसंप्रदायसंरक्षणार्थं बहुतरमहाविद्यालयादिद्वारा स्वयं स्वान्तेवासिवर्गद्वारेण च मतान्तरानुसारिभिः सांप्रतमप्याक्रम्यमाणमद्वैतदर्शनं स्वीयसदुपदेशादिद्वारा सन्निबन्धादिद्वारेण च सुरक्षन्ति।

अद्वैतमतं हि प्रपञ्चमिथ्यात्व-ब्रह्मात्मैकत्व-ज्ञानकाण्डमात्रपारमार्थिकप्रामाण्यादिविविधस्वासाधारणप्रक्रियाविशेषैरेवात्मानं लभमानमपि कर्मकाण्डोपासनाकाण्डादीनामपि व्यवहारदशायां प्रामाण्यावलम्बने मतान्तरैः साकं लेशतोऽपि न विरुणद्धीतीदं सांप्रतिकानां श्रीशृङ्गगिरिपीठाध्यक्षाणां पुण्यात्मनां स्वीयपीठाधिरोहणसमयमारभ्य सप्तविंशतिवत्सरान् व्याप्याद्य यावत् व्यवस्थापकादिसभादिद्वाराऽत्यन्तमेव ग्लानिं प्राप्यमाणस्य सनातनधर्मस्य संरक्ष-

णार्थं समुचितेन व्यापारेण सर्वमेव भारतवर्षमधमर्णमेव तेषाम् ।

सनातनधर्मविरुद्धव्यवहारप्रसङ्गे स्वात्यन्तान्तरङ्गप्रेमपात्राणि राजमहाराजतत्सचिवोत्तमादीनपि तृणाय मन्वानेषु प्रथमगणनीयाः पूज्यतमा अद्वैताचार्यास्तु श्रीचन्द्रशेखरभारतीन्द्रा एव । इमे हि प्रातःस्मरणीयाः पूज्यपादाः कृपालेशमात्रेण स्वन मूकानपि वाचलयन्ति, अकिञ्चनानपि महेन्द्रयन्ति स्वपूर्वपुरुषाः श्रीविद्यारण्यादय इव तत्तादृशमन्त्राद्युपदेशद्वारेति प्रत्यक्षमिदं सर्वेषाम् । अन्वर्थाजातशत्रवः शान्तप्रकृतयः स्वापराधिष्वपि कृपापात्रदृष्टयश्च भगवत्पादा इमे स्वस्थानसमुचितान्तेवासिनामपि संग्रहणेन स्वपीठोचितानि तत्तत्संप्रदायरक्षणादीन्याचन्द्रतारकं संरक्षितुं दूरदृष्ट्यैव प्रयतन्त इति नास्माकमन्तेवासिनां सनातनधर्मरक्षणे लेशतोऽपि नैराश्यशङ्का समुन्मिषति ।

सांप्रतं तु— लोकोत्तमकुसुमानां संकलनेन पूज्यतमानामेषां नक्षत्रोत्सवमुपलभ्य भक्तप्रवरैः संगृह्यमाणे भक्तकुसुमाञ्जलौ मदीयान्यपि कानिचन सुमानि सप्रश्रयं साष्टाङ्गनमस्कारं चोपहरामि, येन मदीयाः सर्व एव वंशा विद्यानिबन्धना जन्मनिबन्धनाश्च धन्यधन्या भवितार इति ॥



# २४

## ॥ चारुचर्या ॥

[ मैसूर्संस्थान शिवमोग्गानगरस्थ पण्डित सुब्रह्मण्य-
शास्त्रिणा विरचिता ]

श्रीसद्गुरुचरणारविन्दाभ्यां नमः ॥

जाड्यं धुनोति जगतां शुभमातनोति
चेतः प्रसादयति मोहमपाकरोति ।
प्रज्ञां ददाति जनिमृत्युभयं निहन्ति
किं किं न साधयति सद्गुरुसेवनं नः ॥ १ ॥

वल्गुस्मितद्युतिमुखेन्दुसुधारसार्द्र-
वाचा वशीकृतबुधप्रवरस्तुताय ।
श्रीचन्द्रशेखरयतीन्द्रगुरूत्तमाय
सत्त्वैकतानहृदयाय नमः परस्मै ॥ २ ॥

वाचस्पतिः प्रथमवाचि कणादशास्त्र-
निष्णातधीरुभयतन्त्ररहस्यवेत्ता ।
स्वायत्तसांख्यविवृतिः कविसार्वभौमः
श्रीचन्द्रशेखरगुरुर्जयताद्धरित्र्याम् ॥ ३ ॥

विश्वप्रसिद्धविबुधाढ्यकुलप्रसूतेः
प्राधीतसर्वनिगमागमसारवेत्तुः ।
श्रीचन्द्रशेखरगुरोर्दिनचारुचर्यां
दृष्टश्रुतार्थविदितामिह वर्णयामि ॥ ४ ॥

अनाद्यविद्याकलुषीकृतानां
विचिन्वतां प्राक्सुकृतेन शान्तिम् ।
यः प्रादुरासीन्मनसः प्रसादः
कुतूहलात्तं विनिवेदयामः ॥ ५ ॥

तुङ्गातटे तुङ्गतरङ्गमाला-
संप्लावितानोकहराजिरम्ये ।
अद्राक्ष्म कौसुम्भपटीं वसानं
रुद्राक्षमालापरिशोभिकण्ठम् ॥ ६ ॥

भस्मत्रिपुण्ड्रोज्ज्वलफालदेशं
चिन्मुद्रयालंकृतपाणिपद्मम् ।
मन्दस्मितोदारमुखं स्वकीय-
तेजोभिरावर्जितलोकनेत्रम् ॥ ७ ॥

भूतेषु पञ्चस्वनुभूयमान-
गुणानविद्याकलितान्विभाव्य ।
उदासितारं विषयेषु तत्त्व-
मात्मानमात्मन्यवलोकयन्तम् ॥ ८ ॥

दयार्द्रमन्तःकरणं स्वकीय-
माळोकमात्रेण निवेदयन्तम् ।
कामादिषड्वर्गजयप्रमोद-
सुधारसास्वादननिर्विकारम् ॥ ९ ॥

दुर्दर्शरूपं दुरितानुषङ्गै-
रुपास्यमानं सुकृतान्तरङ्गैः ।
नितान्तसंतोषभृदन्तरङ्गं
मैत्र्यादिचेतःपरिकर्मसिद्धम् ॥ १० ॥

प्रणम्य भक्त्या यतिपुङ्गवस्य
पादाम्बुजातं सुकृतैकलभ्यम् ।
तद्दर्शनैरेव कृतार्थभाव-
मास्वाद्य संमोदमुपेयुषो नः ॥ ११ ॥

निसर्गवात्सल्यमनोहरेण
कटाक्षपातेन विलोक्य हर्षात् ।
क्षेमस्य योगस्य विचारपूर्व-
मानन्दयामास नितान्तमस्मान् ॥ १२ ॥

॥ बोधचर्या ॥

प्रसङ्गतोऽस्मान्विनिनीषुरेत-
दुपह्वरे प्राह दयार्द्रचेताः ।
नैसर्गिकी तस्य हि बोधचर्या
परोपकारव्रतिनो महान्तः ॥ १३ ॥

न जातिरेषा व्यवहारहेतु-
रिदं गुरुत्वं न च शिष्यता वा ।
हितोपदेष्टृत्वफलं गुरुत्वं
गुरूक्तिविश्वासफला हि शिष्यता ॥ १४ ॥

संसेविता सद्गुरुकल्पवल्ली
फलत्यवश्यं चतुरः पुमर्थान् ।
कामान् प्रदुग्धे गुरुवर्यसूक्ति-
रतीन्द्रियार्थावगतौ प्रमाणम् ॥ १५ ॥

सुखभ्रमादैहिककर्मजालं
तनोति विद्वानपि दुःखहेतुम् ।
निर्वेदमायाति न चैव लोको
मोहो महीयान् विकरोति पुंसः ॥ १६ ॥

असक्तचित्तो विषयेषु नित्यं
धर्माश्रमाचारविधूतपापः ।
परात्परं शंकरमर्चयंश्च
पुनाति लोकं लभते च मोक्षम् ॥ १७ ॥

विचारपूर्वं विषयेषु विद्वान्
दोषानुषङ्गं मनसा विभाव्य ।
शनैर्विरक्तिं प्रतिपद्य शान्तः
पुमर्थलाभाय यतेत भूमौ ॥ १८ ॥

देहेन्द्रियप्राणमनोमुखेषु
न चात्मता येषु ममत्वबुद्ध्या ।
दुष्टो हि लोके व्यवहार एष
किं च प्रसिद्धेर्न विवित्सिका स्यात् ॥ १९ ॥

एभ्यो विभिन्नात्मविचारयोगा-
द्विशिष्यते मर्त्यजनिः पशुभ्यः ।
अपारसंसारमहाब्धिमग्नो
न चैव तच्चेतयते जनोऽयम् ॥ २० ॥

अनेकजन्मार्जितमोहपङ्को
न चैकदा यद्यपि शुद्धिमेति ।
गुरूपदेशामलवारिधौतो
विशुध्यति प्राक्तनपुण्ययोगात् ॥ २१ ॥

जानीमः कलिदोषेण मिथ्यादृष्टिहता द्विजाः ।
आत्मश्रेयांसि नेक्षन्ते कुतर्कहतबुद्धयः ॥ २२ ॥

प्रशस्ततीर्थसंजाता अपि राजसवृत्तयः ।
दोषाकरप्रणयिनः कैरवप्रकरा इव ॥ २३ ॥

पारीणाः सर्वशास्त्रेषु धुरीणाः सर्वकर्मसु ।
अनात्मनीनाश्चेष्टन्ते यथाकालीनमानसाः ॥ २४ ॥

कदध्वनीना नैव स्युर्बहुभङ्गभ्रमा अपि ।
साधवोऽगाधहृदया गुणरत्नौघसिन्धवः ॥ २५ ॥

अमोल्लङ्घितमर्यादा नित्यमुत्पथगामिनः ।
धर्मसेतून्विभिन्दन्ति कुपूरा इव दुर्जनाः ॥ २६ ॥

सर्वशास्त्रार्थतत्त्वज्ञा वयमेवेति वादिनः ।
सन्त्यात्मनीनविज्ञानकुशला दुर्लभा भुवि ॥ २७ ॥

इदं दुष्टमयं दोष इति जल्पन्ति वाग्मिनः ।
स्वाज्ञानदोषविज्ञाने किं सुप्ताः किमु मूर्च्छिताः ॥ २८ ॥

खलः स्निग्धो विकुरुते प्रक्षुब्धो बाधते भृशम् ।
लालितो लेढि शुनको दन्तैर्दशति कोपितः ॥ २९ ॥

सद्भिः संवासशीलानां सत्त्वं संजायते नृणाम् ।
घनसारानुषङ्गेण सुगन्धि सलिलं भवेत् ॥ ३० ॥

अतीन्द्रियार्थविज्ञाने गुरुरेव विलोचनम् ।
येन हीना न पश्यन्ति जात्यन्धा इव दर्पणम् ॥ ३१ ॥

प्राज्ञोपज्ञाः सदाचाराः प्राज्ञा लोकहितेप्सवः ।
हितं च सर्वदा पथ्यं पथ्यभोक्ता न हीयते ॥ ३२ ॥

विचिकित्सा कुतो वर्णाश्रमधर्मे महीयसि ।
आचामं याचमानस्य कुतः पाकविचारणा ॥ ३३ ॥

फलान्यननुसन्धाय श्रद्धादेयी भवाधुना ।
कर्मानुरूपफलदो भगवान्न हि मत्सरी ॥ ३४ ॥

प्रवाससुखपाथेयं द्रविणेनात्र लभ्यते ।
पारलौकिकपाथेयं धर्ममूल्येन साध्यते ॥ ३५ ॥

कत्यग्रहीषं जन्मानि सेत्स्यन्ति कति वा पुरः ।
एषाऽयव्ययसक्तस्य तिरोभूता विचारणा ॥ ३६ ॥

सत्त्वसौशील्यपारम्यपरितुष्टो जितेन्द्रियः ।
वरिवस्याविशुद्धात्मा चतुर्वर्गं समश्नुते ॥ ३७ ॥

पञ्चयज्ञपरा दुष्टविषयेषु गतस्पृहाः ।
परमार्थं विचिन्वानाः श्रेयः परमवाप्स्यथ ॥ ३८ ॥

## ॥ क्रियाचर्या ॥

आम्नायमित्थं परिबोध्य शिष्यान्
विधित्सुरर्चां परदेवतायाः ।
स्नात्वा विधायाह्निकमादरेण
श्रीचक्रराजस्य समीपमाप ॥ ३९ ॥

रत्नप्रदीपाङ्कुरभासमाने
प्रसूनमालास्तृतरत्नपीठे ।
निधाय चक्रेश्वरमर्चयित्वा
स्थिरासनो जप्यमसौ जजाप ॥ ४० ॥

चत्वारि चक्राणि शिवस्य शक्तेः
पञ्च प्रपञ्चस्थितिसाधनानि ।
तेषामभेदेन विधाय पूजा-
मानर्च बिन्दौ ललितापदाब्जम् ॥ ४१ ॥

प्रसूनमन्त्राक्षतदुग्धसेकैः
सौरभ्यविभ्राजितधूपदीपैः ।

मातृष्टकाद्यावरणान्तपूजां
विधाय संतर्प्य बलिं व्यतानीत् ॥ ४२ ॥

कृत्वा चतुःषष्ट्युपचारमन्तः
प्रसाद्य देवीं ललितां हृदब्जे ।
मन्त्रार्णचक्रेश्वरयोरभेदं
स्वात्मन्यभेदं च तयोर्निदध्यौ ॥ ४३ ॥

अनुसवनमपीत्थं भक्तियोगैकगम्यां
विधिविहितसपर्याचर्यया चार्चयित्वा ।
हृदि विनिहितदेवीपादपद्मानुषङ्गा-
त्परिगतपरमानन्दचेता बभूव ॥ ४४ ॥

## ॥ गुणचर्या ॥

औत्पत्तिकी सुजनता दृढभक्तियोगो
माङ्गल्यमार्जवमविप्लुतनैष्ठिकत्वम् ।
संभाविता भुवनसंवनना गुणाश्च
योगेश्वरस्य भुवने किमसाध्यमस्ति ॥ ४५ ॥

## ॥ भक्तिचर्या ॥

अर्चावसानसमये हृदये महेशं
ध्यात्वा प्रमोदरसपूरनिमग्नचेताः ।
आनन्दबाष्पभरगद्गदरुद्धकण्ठो
भक्तिप्रकर्षपुलकोद्गमयुक्तिरास्ते ॥ ४६ ॥

## ॥ समयचर्या ॥

तुङ्गातरङ्गशिशिरीकृतसैकतान्त-
 राविश्य शिष्यपरिमण्डलमध्यवर्ती ।
संश्रावयन्निगममौलिविनिश्चितार्थं
 कालं व्यनीनयदसौ यमिसार्वभौमः ॥ ४७ ॥

## ॥ प्रसादचर्या ॥

स्वप्नावबोधसमयेषु वचस्सवित्री
 देवी निसृष्टनिखिलार्थसखीव यस्य ।
कर्तव्यतां समुपदिश्य सतां हिताय
 संसाधयां सुकरमास चतुःपुमर्थान् ॥ ४८ ॥

## ॥ प्रातिभाचर्या ॥

दृष्टं श्रुतं यदपि किंचिदवस्तु वस्तु
 काले गतेऽपि चिरसंस्तुतवद्विदित्वा ।
संस्मारयत्यवितथं निजयोगशक्त्या
 तत्प्रातिभं नयनमन्यजनैर्दुरापम् ॥ ४९ ॥

## ॥ दानचर्या ॥

कल्पद्रुमस्तु भजतामभिवाञ्छितानि
 दुग्धे कृतान्तभयदर्शननीरसानि ।
सोऽयं स्मृतो वितरति प्रतिभीतिशून्या-
 न्यानन्दसंप्लवरसोत्तरवैभवानि ॥ ५० ॥

## ॥ ज्ञानचर्या ॥

सोपप्लवान् विषमयान्विषयानुदीक्ष्य
नित्यप्रमोदमनिवारितमप्रमेयम् ।
संविन्मयं किमपि चिन्तयति प्रकाम-
माध्यायति स्वयमपास्तसमस्तभेदम् ॥ ५२ ॥

## ॥ विरक्तिचर्या ॥

सुरवरभवने वा रौरवे वा क्व वा स्या-
ज्जनिरिह भवतः किं त्यक्तसर्वैषणस्य ।
हृदयगुरुपदाब्जं चिन्तयन्नात्मनीनं
निरवधिकसुखाब्धौ सामरस्यं प्रयाहि ॥ ५३ ॥

एधिषीष्ट चिरं श्रीमज्जगद्गुरुरुदारधीः ।
एधिषीरन् जनाः सर्वे तत्पादयुगलाश्रयाः ॥ ५४ ॥

अस्ति कर्णाटेषु प्रवर्षुकाम्भोधरमालामेदुरनभोविभागः, विविधौषधलतासंतानबहुलारण्यपरिवृतप्रान्तरः, सर्वसंपन्निकेतनं, शाद्वलः, पङ्किलोऽनूपवान् , व्रीहिपालितः, शृङ्गगिरिसंज्ञितो भुवो विभागः । यश्च नितरां प्रीणयत्यन्तरात्मानं, संपन्नसस्यतया, निसर्गरुचिरतया, प्रशान्तपावनतया, जन्मभूमितया तुङ्गभद्रायाः, प्रशान्तनिकेतनतया विभाण्डकादिमहामुनीनां, क्रीडागारतया श्रीशारदाविलासानां , कोशभवनतया प्रकृतिसौन्दर्याणाम् । यस्मिन्नाजानपावने, निर्वैरप्रशान्ततपोवने, श्रीमच्छंकरभगवत्पादप्रतिष्ठापिताद्वैतव्याख्या-

नसिंहासनमधितिष्ठन् , सुमसमयसमुदीयमानकुसुमावली-
स्यन्दमानमरन्दधाराधोरणीमधुरिमाधरीकरणचणवाग्वैभवः,
निखिलावनीपालमकुटतटरत्ननीराजितचरणयुगलः, निर्मर्या-
दातिप्रवृद्धदुर्मतदुर्मनायमानसज्जनशर्मनिर्माणकार्मणः, नैस-
र्गिकतयानुगृहीतसकललोकः, निगमोद्धरणधृतमत्स्यरूपहरि-
रिव संगृहीतसत्यव्रतः, राकाशशाङ्क इव सुताराातितुल्यरूपः,
वसन्तसमय इव सुमहितविप्रसवोल्लासनपटुः, बादरायण इव
प्रतिपादितधर्मविजयः, शतक्रतुरिव परिचितशतकोटिप्रशमि-
तसत्प्रतिपक्षविवादः, राजकोशगृहा इव दीनारातिपोषण-
कुशलः, रत्नप्रदीप इवानादृतविषयस्नेहः, छन्दोविचितिरिव
यतिगणगुणरञ्जितः, नटराज इव संध्याभ्रपटसंवीततनुः,
ग्रीष्मसमय इव पुरोविराजिताषाढः, शैलसुताप्रणयविलास
इव करविधृतरुद्राक्षः, महाराजभवनमिव महाविभूतिभू-
षितः, परित्यक्तसर्वाशाविग्रहोऽपि समाश्रितदक्षिणाशावि-
ग्रहः, वीताखिलतृष्णोऽपि गुणिगणार्जनैकताततृष्णः, वा-
ग्मिप्रवरोऽपि परपरीवादैडमूकः, अपारसारस्वतवारांनिधि-
रपि भ्रमभङ्गरहितः, गोप्ता धर्मकोशस्य, आधारः शास्त्रसं-
ततेः, निवासो वात्सल्यस्य, विहारभूमिर्गुणगणस्य, कुलभ-
वनं प्रतिभायाः, क्रीडागारः सौजन्यस्य, एकाश्रयः शारदा-
म्बाप्रसादानुग्रहस्य, श्रीमज्जगद्गुरुपट्टभद्रश्रीमच्चन्द्रशेखरभारती
विजयतां धरातले ॥

आ सप्तविंशपरिवत्सरमूर्जितश्री
ऽर्याख्यानभद्ररुचिरासनमास्थितः सन्

आम्नायमौलिपरतत्त्वमपीपलद्यः
श्रीचन्द्रशेखरगुरुर्जयताच्चिराय ॥

अधीतिः साहिती यस्य विनेता श्रीजगद्गुरुः ।
सुब्रह्मण्यस्य कृतिषु चारुचर्या प्रसाधिता ॥



२५

# ॥ आचार्यनवरत्नमालिकास्तवः ॥

[ दिवान् बहदूर्-बि. ए., बि. एल्.-इत्यादि बिरुदालंकृतेन के. एस्. रामस्वामिशास्त्रिणा विरचितः ]



यस्य स्मरणमात्रेण पापौघः शून्यतां व्रजेत् ।
ज्ञानपद्मस्य सूर्यो यः शंकरो नः प्रसीदतु ॥ १ ॥

संसारसर्पदष्टानां महाजाङ्गलिको गुरुः ।
अवतीर्णो भिषङ्नाथः शंकरो नः प्रसीदतु ॥ २ ॥

चिन्मयानन्दमूर्तिर्यः संसारार्णवतारकः ।
महाकारुणिको योगी शंकरो नः प्रसीदतु ॥ ३ ॥

यद्वाग्गङ्गाप्रवाहेण पूताः स्युः पामरा जनाः ।
भस्मीकृतास्तु कामाग्न्या शंकरो नः प्रसीदतु ॥ ४ ॥

नष्टमार्गान्भवाटव्यां दुःखपूर्णांश्च विह्वलान् ।
मार्गबन्धुः सदा पाति शंकरो नः प्रसीदतु ॥ ५ ॥

दुःखद्वारपिधानं यः शिष्याणां विदितात्मनाम् ।
प्रेम्णा करोति सततं तं वन्दे लोकशंकरम् ॥ ६ ॥

दृष्ट्यैव पावयन्तीं करुणातटिनीं सदैव परिपूर्णाम् ।
वरतुङ्गोत्तुङ्गझरीं शरणं करवाणि देशिकेन्द्रस्य ॥ ७ ॥

ज्ञानदं करुणाकरं बुधसेवितं मुनिपुंगवं
शारदावदनाम्बुजं स्मितशोभितं स्तुतिभानुना ।
चारुणा सुविकासयन्तमघौषधं भवरोगिणां
चन्द्रशेखरमाश्रये किं करिष्यति मेऽज्ञता ॥ ८ ॥

भक्तिः पूर्णा करतलगतः कर्मशास्त्रप्रवाहो
योगस्तीर्णः सकलविभवो मन्त्रराजप्रयोगः ।
ज्ञानं सर्वं सकलसुखदं सर्वदा लब्धमेव
प्राप्तो यस्मात्परमसुकृताद्देशिकेन्द्रप्रसादः ॥ ९ ॥

रामस्वामिसुधीहस्तगुम्फितां रत्नमालिकाम् ।
अङ्गीकरोतु कृपया चन्द्रशेखरभारती ॥





श्रीशंकरमठः श्रीशंकरालयश्च, कल्याणपुरी ।

# २६

# गीतासारगुर्वष्टोत्तरशतनाम-स्तोत्रम् ॥

[ बि. ए., बि. एल्. अड्वकेट् इत्यादि बिरुदालंकृतेन ब्रह्मश्री. कृष्णस्वाम्यार्येण विरचितम् ]



प्रशान्तात्मा विगतभीर्योगी विगतकल्मषः ।
योगयुक्तो विशुद्धात्मा यतचित्तेन्द्रियक्रियः ॥

स्वकर्मनिरतः शान्तो धर्मात्माऽमितविक्रमः ।
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ॥

स्थिरबुद्धिरसंमूढो जितात्मा विगतस्पृहः ।
सर्वसंकल्पसंन्यासी भक्तः सङ्गविवर्जितः ॥

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
एकाकी योगसंसिद्धो योगारूढोऽपरिग्रहः ॥

ध्यानयोगपरो मौनी स्वस्थः संशुद्धकिल्बिषः ।
वीतरागभयक्रोधः स्थितधीर्विगतज्वरः ॥

सर्वारम्भपरित्यागी कृत्स्नवित् कृत्स्नकर्मकृत् ।
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ॥

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
अनिकेतः स्थिरमतिर्महात्मा दृढनिश्चयः ॥

निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
निस्त्रैगुण्यो वशी ज्ञानी समलोष्टाश्मकाञ्चनः ॥

तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥

विद्वानात्मरतिर्मुक्तो नित्यतृप्तो निराश्रयः ।
अन्तःसुखोऽन्तराराामः संतुष्टः सर्वविस्पुमान् ॥

सर्वभूतात्मभूतात्मा तत्त्ववित्समदर्शनः ।
गतिर्भर्ता प्रभुःसाक्षी निवासः शरणं सुहृत् ॥

आत्मतृप्तो गुरुः पूज्यो गरीयान् पुरुषोत्तमः ।
ब्रह्मभूतः प्रसन्नात्मा कृतकृत्यो विराजते ॥

स्थितप्रज्ञो गुणातीतो लोकानुग्रहकाम्यया ।
शारदायाश्चरा मूर्तिः शृङ्गशैले जगद्गुरुः ॥

गीतामध्यगतैरेव ग्रथितेयं पदैः शुभैः ।
आचार्येन्द्रपदाम्भोजे भक्त्या माला समर्प्यते ॥

वक्तुं ब्रह्मविदां श्रेष्ठं मनोवाचामगोचरम् ।
कथमन्याः समर्थाः स्युर्वाचो भागवतीर्विना ॥

इति गीतासारगुर्वष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥



२७

# ॥ श्रीचन्द्रशेखरनक्षत्रमाला ॥

[ बेंगलूर् श्रीशंकरमठमहापाठशालाध्यक्षेण पण्डितवरेण-
वेंकटेशशास्त्रिणा विरचिता ]



श्रीमच्छृङ्गगिरौ महामहिमनि प्रद्योतमाने मठे
नित्यं संनिहितां हितां प्रणमते श्रीशारदाम्बां तथा ।
प्रख्यातं भुवि चन्द्रमौलिवचसा लिङ्गं समाराधयन्
संलीनो मुदि चन्द्रशेखरगुरुश्रेष्ठो विभाति स्फुटम् ॥

सत्पूज्यस्त्विति भावना समुदियाल्लोकस्य यद्दर्शनाद्
गम्भीरैर्मृदुभिर्यदीयभणितैर्मन्दस्मितोपस्कृतैः ।
श्रोत्रन्तःकरणं शिलोपममपि प्रेयान्मृदुत्वं ध्रुवं
नित्यं नृत्यतु मे मनोमधुकरस्तत्पादपद्मद्वये ॥ २ ॥

चण्डत्वाख्या न वृत्तिर्मनसि समुदियाद्यस्य सत्त्वप्रधाने
सर्वे कामाः समन्ताद्वशमुपगमिता यं विजेतुं प्रवृत्ताः ।
वैराग्याख्यात्स्वकीयात्सुदृढतरभटाद्भिक्षुयं हन्त याता
धावत्सूक्तं जपन्तो विलयमुपगता जन्म नैव प्रयायुः ॥

द्रढिमा वसतिविहीनो मनोऽन्तरे यन्मानसरङ्गे हि ।
नृत्यति तत एव सुखं नित्यं यः श्रीगुरुरनुभवति सदा ॥

शेषोऽपि यस्य शमदान्तिमुखान्गुणान्नु
न ख्यातुमप्यलमिति प्रतियन्ति सर्वे ।
वाचस्पतिः खलु मतो न मतं तदीयं
यश्चेहते ननु तथापि विचित्रमेतत् ॥ ५ ॥

खवृन्दं व्यावृत्तं विषयचयतो यस्य च गुरोः
सदा निर्व्यापारं तव इह मनो बाह्यविषयात् ।
निवृत्तं चैकाग्रं परमपदवीं हा सुखमयीं
स्पृशद्बुद्धावस्थं लयमुपगतं स्वात्मनि परे ॥ ६ ॥

रहसि वसतिर्यस्य प्रेमास्पदं न जनाकुले
श्रुतिरपि तथाऽऽचष्टे ध्यानोत्सुकान्यतिनः प्रति ।
अयमपि गुरुश्चासुप्तेरामृतेरिति वाक्यवि-
त्प्रविततमिह ध्यानासक्तः समस्ति न संशयः ॥ ७ ॥

भावं भावं परमपदवीं तत्त्वसाक्षात्कृतिं यः
संपद्याऽऽस्ते न खलु विशयोऽत्रेत्यहं प्रब्रवीमि ।
जीवन्मुक्तः क्षपयति परं नूनमारब्धकर्म
च्छान्दोग्यस्थं प्रवदति तथा तस्य तावद्वचो हि ॥ ८ ॥

रत्वा ब्रह्माणि नित्यतृप्तिमनिशं योऽसौ महादेशिकः
प्राप्तोऽतो न हि किंचिदस्ति सफलं कार्यं परं यद्यपि ।

'सक्ताः कर्मणि' पद्यवित्तु तदपि स्वाम्यर्चनाद्याः क्रियाः
कुर्वन्नस्ति हि लोकसंग्रहमहो कर्तुं सदा प्रोत्सुकः ॥ ९ ॥

तीक्ष्णा बुद्धिर्यदीया कठिननयशिलां स्फोटयत्येव नूनं
वाक्यार्थोक्तिः सभायां प्रचकितमनसः कोविदान्संविधत्ते ।
प्रश्नान्शास्त्रे यदीयानतिरसुलभान्यः समाधातुमीष्टे
तादृग्विद्वान्न चाभून्न हि भवति तथा नो भविष्यत्यनन्याम् ॥

स्वाधीना मणिदीधितिप्रभृतयो ग्रन्थाश्च गादाधरी
नृत्यन्ती बहुधा परिष्कृतियुता यत्कण्ठरङ्गस्थले ।
तस्मादेव महान्सुदेशिकवरो विद्वत्सभायां नये
तर्काख्ये विदधाति विस्मयकरं शार्दूलविक्रीडितम् ॥

मिथ्यात्वं जगतः सुयुक्तिजटिलाः यद्वाग्झरीः शांकरीः
लोकानां स्पृशतां प्रभाति सुतरां तद्भाष्यरूपे सदा ।
गङ्गास्रोतसि मज्जनं विदधतः श्रीदेशिकेन्द्रप्रभोः
स्वान्तान्तर्मलमेव नास्ति परमानन्दः समस्ति प्रभान् ॥

योगीन्द्रोऽयं भवे प्राच्यधिगतनिगमं संस्मरन्नेव बाल्ये
'आचार्याद्धैव विद्या' श्रुतिवचनवशः सद्गुरोर्न्यायशास्त्रम् ।
श्रीमत्प्रस्थानविद्यामपि च पठितवान्जैमिनीयं नयं च
शाब्दीं विद्यामवैतीति कथमपरथा तादृशी वैदुषी स्यात् ॥

गिरीशः सद्भाष्यं व्यतनुत पुरा शंकरमहा-
ऽवतारं प्राप्तः सन्नपरथयितुं भाष्यहृदयम् ।

जनं ज्ञात्वोत्सुक्कं पुनरपि महादेशिकतया-
वतीर्णो निष्कृष्टामवगमयितुं भाष्यसरणिम् ॥ १४ ॥

पाठनरीतिर्यस्याऽनितरसुलभेति तच्छिष्यतां प्राप्ताः ।
आचक्षीरन् सुदृढं तद्विषये साक्षिभूतोऽहम् ॥ १५ ॥

दक्षोऽसौ विषयोपपादन इति श्रुत्वा कलार्थिव्रजाः
शीघ्रं शृङ्गगिरिं समेत्य सहसा यच्छिष्यभावं गताः ।
यच्छक्तिं महतीमहो प्रवचने दृष्ट्वा गता विस्मयं
पूर्वं यावगतिर्गुरौ प्रमितितां तस्यां हि निश्चिन्वते ॥

तत्ताहक्षे सच्चिदानन्दविलासमन्दिरे नित्यम ।
शुद्धान्पूज्यान्मन्त्राञ्जापं जापं नित्यसुखे लग्नः ॥ १७ ॥

लगति सततं स्वान्तं शुद्धे परमात्मनि यस्य तु
व्यवहृतिरपि श्रेष्ठा गीतोदितस्थितधीसमा ।
अशनवसनप्रष्ठान्हेतूञ्शरीरपरिस्थिते-
र्न गणयति यः प्रारब्धाऽऽख्या कृतिस्तु नयेदिति ॥

जानेऽहं यतिराडसावुपरतः प्राग्भवे संततं
योगाभ्यासरतो मृतस्त्वनियतात्प्रारब्धकर्मक्षयात् ।
नाप्तो योगफलं च कृष्णवचनप्रामाण्यतो योगिनां
वंशे जात इति ध्रुवं ह्यपरथा त्वेवंविधः स्यात्कथम् ॥

विधेकदेशमपि यत्सविधादनाप्त्वा
यत्संनिधिस्थितिमहं समुपेत एव ।

धन्यं स्वकं ध्रुवमहो सततं विजानन्
कत्थे खलु प्रविदुषां सविधे सदा माम् ॥ २० ॥

जय जय देशिकवर्य दर्शनमात्रेण जनान्प्रीणयसि ।
भावत्कपादनलिनं मच्चित्ते भासतां सततम् ॥ २१ ॥

यं पुत्रं प्राप्य विद्वान्स्वकृतसुकृततः प्राग्भवे गोपशास्त्री
लक्ष्म्यम्बाख्या सती च ध्रुवममितमुदं प्राप्य चेत्थं जगत्याम्।
प्रख्यातिं प्राप्तवन्तौ सुजनिसफलतां यातवन्ताविमौ द्वौ
प्राचीने जन्मनीमावतिसुकृतचयं साध्वकार्ष्टां सुभक्त्या ॥

ते विद्वांसः सुकृतिपुरुषा जन्मसाफल्यवन्तः
शास्त्राम्बोधेः सुतरणफलं नित्यमासादयन्तः ।
येऽमी नित्यं सहनिवसतिं देशिकेन्द्रेण शास्त्रे
वादाख्यां च प्रविततकथां कुर्वते मोदमानाः ॥ २३ ॥

तद्देशिकस्वामिगुरोः समासीत्पितामहः पण्डिततल्लजो हि ।
शब्दादिशास्त्रे गुरुवैदुषी च ततोऽभवद्धेतुसमं हि कार्यम् ॥

मां भाति चैवं यतिभावयुक्तः
संत्यज्य गेहं परिधावतीति ।
सर्वान् जनान् बोधयितुं मुनीन्द्रः
संन्यासमाप्तोत्परिधाविवर्षे ॥ २५ ॥

स छात्राणां सुरक्षानियमनविधिना नाशयन्नार्तिवृन्दं
जिज्ञासुभ्यश्च मोक्षप्रदमतिजनकं शास्त्रमध्यापयन्हि ।

अर्थार्थिभ्यो यथेष्टं धनवितरणतः स्वेष्टवस्तु प्रयच्छन्
ज्ञानिभ्यो ज्ञाननिष्ठामतिसुदृढतरां संददद्भाति नित्यम् ॥

द्रातव्या ब्रह्मविद्या ह्युपसदनविधिं पालयद्भ्यो जनेभ्यो
मत्वेत्थं देशिकेन्द्रो यतिवरनिकरान्पाठयन्सूत्रभाष्यम् ।
अम्बायाश्चन्द्रमौळेः परिचरणविधौ व्यग्रतां देशिकस्य
प्रेक्षं प्रेक्षं समर्थो मनसि समुदितं विस्मयं नो नियन्तुम् ॥

नक्षत्रमालां बहुवृत्तशोभां संन्यासवर्षप्रमितां तु संख्याम् ।
प्राप्तां कृतां भक्तिवशात्सुवृत्तां श्रीवेङ्कटेशो गुरवेऽर्पयामि ॥





शृङ्गगिरिश्रीमठान्तरे श्रीमदाचार्यपादानामुत्सवप्रवेशः ।



श्रीविद्याशंकरालयः, शृङ्गगिरि ।

# I

# ACHARYASIDDHANTA *

[*Mahamahopadhyaya Doctor Ganganatha Jha, Retired Vice-Chancellor, University of Allahabad, Allahabad.*]

---

There are those who hold that the text 'न वर्णा न वर्णाश्रमाचारधर्माः' of Sri Sankarabhagavatpada indicates how the great Acharya condemns the performance of rites. But a complete examination of the works of the Acharya, like his Sarirakabhashya etc., reveals the following conclusion. 'For the attainment of the final *purushartha* knowledge becomes essential; for acquiring knowledge, a pure mind is necessary; for acquiring purity of mind, due performance of all the prescribed rites becomes essential.' Thus due performance of rites becomes an integral part of the teaching of Sri Sankara.

The establishment of seats of worship at places like Kanchi, Sringeri etc, where his successors carry on the worship of the deities even today in all its fulness is a further proof of the view held by the Acharya that due performance of rites is an integral feature of his teaching.

# II

## PANCHARATNASTOTRA *

[*Sri R. Krishnaswami Aiyar, M. A., B. L.,*
*Advocate, Viraraghavapuram, Tinnevelly.*]

---

A string of five stanzas devoted to the glorification of Sri Chandrasekhara Bharati, the presiding Pontiff at Sringeri.



## III

# Mandanamisra-Suresvara-Identity *

[*Vidyasagara Vidyavachaspati P. P. Subrahmanya Sastri B. A.* (*Oxon*), *Professor of Sanskrit, Presidency College, Madras.*]

---

'Traditionalism is not necessarily wrong, nor all modernism necessarily right.'

Suresvara, the first Acharya who was established in the Vyakhyana Simhasana of the Sarada Pitha established by Sri Sankarabhagavatpada is identical with the famous Mandanamisra, the author of the Brahmasiddhi, Vibhramaviveka etc. The references to Mandanamisra and Suresvara in the Guruvamsakavya were held by scholars to point out clearly the non-identity of Mandana with Suresvara. The Guruvamsakavya refers to two Mandanamisras, one a lifelong householder who was already a Vedantin before he met Sri Sankaracharya and who had no claim to any literary fame, and the other, the householder Mandanamisra, a keen Mimamsaka who, when convinced by the compelling

arguments of Sri Sankaracharya, became a Sannyasin on whom the Acharya bestowed the title of Suresvara, who had already won literary fame by writing such classic works like the Brahmasiddhi etc. Mandanamisra, after he became Suresvara, wrote the famous Varttikas expounding in full the new doctrines of Advaita taught to him by his famous Guru, Sri Sankaracharya.

Doctrinal differences in works like the Brahmasiddhi and the Varttikas are not necessarily a bar to the identity of authorship, particularly when the details of the doctrinal conversion of the confirmed Mimamsaka-Mandana into the convinced Advaitin-Suresvara are well authenticated, not to speak of some clear-cut doctrinal divergences descernible even in the teachings of the great Acharya Sankara-Bhagavatpada himself. *



* For a fullur exposition of the views, pro and contra, see the Foreword and Indroduction prefixed to the Brahmasiddhi—Madras Government Oriental Manuscripts Library Series.

# IV

## Sri Chandrasekhara Bharati.

[*Sri N. Chandrasekhara Aiyar B. A, B. L, District and Sessions Judge, Madura.*]

---

Sringeri in the Mysore province is a very beautiful spot and is on the banks of the Tunga river. A night's journey from Bangalore by the Bangalore-Poona Mail takes us to Shimoga or Tarikere, from where Sringeri is about sixty miles, by a fairly good road through which buses ply. Sringeri is a contraction for Sringa-giri the hill of Sringa or Rishya-Sringa, of the Ramayana fame, who is said to have lived there with his father Vibhandaka. The place has become famous by its association with the name of Sri Sankara, the Acharya of Advaita philosophy, who founded a Mutt at the place and installed on its seat his chief disciple Suresvara, who was the famous Mandanamisra before he was vanquished in philosophical disputation by his master. Sri Sankara also installed a Sri-Chakra at Sringeri and on it is the entrancingly beautiful idol of Sri Sarada, consecra-

ted by the renowned Vidyaranya of the Vijayanagar Empire, who was for several years head of this Mutt. Adjoining the Sarada temple and within the same enclosure is the shrine of Vidya-Sankara, where Vidya-Tirtha, the guru of Vidyaranya, is believed to be still alive, practising Lambika Yoga in a cave underneath the *Lingam.* The shrine of Vidya-Sankara presents many points of architectural interest and beauty.

The Mutt at Sringeri has been presided over by a succession of Pontiffs of great learning and piety. The previous incumbent was the illustrious Narasimha Bharati Svamigal. He was the 33rd in succession from Sankara, and tradition has it that every eleventh successor is an incarnation of the first Acharya himself. Those who knew Narasimha Bharati Svamigal and came into intimate contact with him had no doubt whatever that this tradition was amply true in his case, for he was a dynamic personality of remarkable intellectual and yogic powers. The present sage who presides over the Mutt is His Holiness Sri Chandrasekhara Bharati Svamigal, in some respects greater even than his great master. If there is any one in Southern India to remind us by his very presence in our midst of the fact that sages like Vasishtha and Vamadeva lived in this holy land, it is the present Jagadguru. He is a master of several Sastras, a poet of great merit, an ascetic par excellence. His

learning staggers us by its vastness. In Tarka, Mimamsa and Vedanta, his scholarship is unrivalled. He has written charming Sanskrit poetry and prose and a commentary on the *Viveka-Chudamani* to be published shortly. His erudition is matched by his spirituality and his yoga. Now and then he loses himself in *samadhi* or trance for days and months together but those around him who are uninstructed in such paths attribute the condition to mental derangement, forgetting the description of a true Yogi by Sadasiva-Brahmendra in his Atma-Vidya-Vilasa.

अवधूतकर्मजालो जडबधिरान्धोपमः कोऽपि ।
आत्मारामो यतिराडटवीकोणेष्वटन्नास्ते ॥

तिष्ठन् परत्र धाम्नि स्वीयसुखास्वादपरवशः कश्चित् ।
क्वापि ध्यायति कुह्चिद्गायति कुत्रापि नृत्यति स्वैरम् ॥

पश्यति किमपि न रूपं
न वदति न शृणोति किञ्चिदपि वचनम् ।
तिष्ठति निरुपमभूमनि
निष्ठामवलम्ब्य काष्ठवद्योगी ॥

He is a seer and a sage. The very personification of *Santi.* His mercy to his disciples and devotees is unbounded. His mere sight has turned many a confirmed agnostic into a firm believer in the existence of God and His rule of justice and righteousness. The ultra heterodox have been changed

